THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

---

Edited by



Mahāmahopādhyāya

GOPI NĀTH KAVIRĀJA, M. A.

---

*No. 45.*

( Part II )

THE

# KIRAṆĀVALĪ PRAKĀŚA

( **Guṇa** )

---

Printed by K. B. Pawagi at the Hitchintak Press,

Ramghat, Benares City

&

---

Published by

The Superintendent, Printing and Stationery,

Government Press, Allahabad.

---

1936.

श्रीः

# किरणावलीप्रकाशः

( गुणग्रन्थः )

वर्द्धमानविरचितः

लखनौ विश्वविद्यालयाध्यापकेन 'एम. ए.' इत्युपाधिधारिणा
शास्त्र्युपाह्वबदरीनाथ शर्मणा संस्कृतः ।



---

THE

# KIRAṆĀVALĪ PRAKĀŚA

( Guṇa )

BY

VARDHAMĀNA UPĀDHYĀYA

Edited by

Badri Nath Shastri, M. A.,

*Lecturer in Sanskrit, Lucknow University ( Lucknow ).*

---

1936.

## Introduction.

No apology is needed at this late hour, I hope, for the publication of Vardhamāna's commentary on Udayana's Kiraṇāvalī ( Guṇa section ), because the sub-commentary on Vardhamāna's work has already appeared in print in this series. The study of Praśastapādabhāṣya can not be properly undertaken until all the late works which have a bearing, either direct as commentary or sub-commentary or indirect as an independent treatise affiliated to the main stock of the school, on Praśastapādā's masterpiece have been published. The Sūkti, Setu, Vyomavatī, Nyāyakandalī & Kiraṇāvalī have appeared already. If Śrīvatsa's Nyāyalīlāvatī refers to Vallabha's famous work of the same name, it has also come out. The present commentary is on Kiraṇāvalī and is from the pen of Vardhamāna Upādhyāya, son of the great Gaṅgeśa Upādhyāya of Mithilā, author of Tattvachintāmaṇi in four sections and father of the so-called Neo-Logic of Bengal & Mithilā.* The age of Vardhamāna is not precisely determinable, but it is believed that he belonged to the fourteenth century of the Christian era. He is said to have been the author of the following works:—

---

* This Vardhamāna is to be differentiated from an earlier author of the same name associated with the composition ( in 1140 A. D. ) of Gaṇaratnamahodadhi and also from a later jurist of the same name, son of Bhaveśa and author of Daṇḍaviveka, Dharmapradīpa, etc.

# Introduction.

No apology is needed at this late hour, I hope, for the publication of Vardhamāna's commentary on Udayana's Kiraṇāvalī ( Guṇa section ), because the sub-commentary on Vardhamāna's work has already appeared in print in this series. The study of Praśastapādabhāṣya can not be properly undertaken until all the late works which have a bearing, either direct as commentary or sub-commentary or indirect as an independent treatise affiliated to the main stock of the school, on Praśastapādā's masterpiece have been published. The Sūkti, Setu, Vyomavatī, Nyāyakandalī & Kiraṇāvalī have appeared already. If Śrīvatsa's Nyāyalīlāvatī refers to Vallabha's famous work of the same name, it has also come out. The present commentary is on Kiraṇāvalī and is from the pen of Vardhamāna Upādhyāya, son of the great Gaṅgeśa Upādhyāya of Mithilā, author of Tattvachintāmaṇi in four sections and father of the so-called Neo-Logic of Bengal & Mithilā.* The age of Vardhamāna is not precisely determinable, but it is believed that he belonged to the fourteenth century of the Christian era. He is said to have been the author of the following works:—

---

* This Vardhamāna is to be differentiated from an earlier author of the same name associated with the composition ( in 1140 A. D. ) of Gaṇaratnamahodadhi and also from a later jurist of the same name, son of Bhaveśa and author of Daṇḍaviveka, Dharmapradīpa, etc.

## A—In Nyāya.

( 1 ) Nyāyapariśiṣṭaprakāśa, commentary on Nyāyapariśiṣṭa of Udayana.

( 2 ) Nyāyanibandhaprakāśa, com. on Nyāyavārtikatātparyapariśuddhi of Udayana.

( 3 ) Nyayakusumāñjaliprakāśa, com. on Nyāyakusumāñjali of Udayana.

( 4 ) Tattvachintāmaṇiprakāśa, com. on his father's Tattvachintāmaṇi.

( 5 ) Prameyatattvabodha.

## B—In Vaiśesika.

( 6 ) Kiraṇāvalīprakāśa, com. on Kiraṇāvalī of Udayana.

( 7 ) Nyāyalīlāvatīprakāśa, com. on Nyāyalīlāvatī of Vallabha.

## C—In Vedānta.

( 8 ) Khaṇḍanakhaṇḍakhādyaprakāśa, com. on Khaṇḍanakhaṇḍakhādya of Śrī Harṣa.

It is unfortunate that the personal views of Vardhamāna are not available in the form of a separate treatise, but these can be easily gleaned from the numerous commentaries of which he was the author.

It is hoped that students of Indian philosophy, especially those of the Vaiśeṣika System, will find the work highly useful and serviceable in the interpretation of many a knotty passage of Udayana's text.

Lucknow University. } Badrinath Shastri.

णा जन्यतां तन्तुविभागेनैव वा स्वाव्यवहितोत्तरकाल एव तज्जननं स्यादित्यत आह–**कारणे चेति**(१) । उत्तरविभागस्तन्त्वाकाशविभाग इत्यर्थः । **स चेति** । तन्तुविभाग इत्यर्थः । अपेक्षाकारणं द्वितन्तुकनाश इत्यर्थः(२) **पूर्वसंयोगेति** । पूर्वसंयोगस्य तन्त्वाकाशसंयोगस्येत्यर्थः । ननु परमाणुकर्मणा न द्व्यणुकपरमाण्वोर्विभागः तस्य संयोगपूर्वकत्वात् आरम्भकपरमाणुना सह द्व्यणुकस्यासंयोगादित्यत आह–**अनारम्भकादिति** । अनारम्भकेन परमाणुना सह द्व्यणुकस्य संयोगपूर्वको विभागः सम्भवत्येवेत्यर्थः । **विनाशकारणाभावादिति** । आश्रयनाशविरोधिगुणान्तराभावादित्यर्थः । **कर्मण इति** । कर्माजन्ये च विभागे तस्यासमवायिकारणत्वादित्यर्थः । **अंशवन्तरविभागमिति** । द्रव्यारम्भकसंयोगाविरोधिनमारभ्यारम्भकवादनिषेधादित्यर्थः ।

ननु यत्कर्म द्रव्यारम्भकसंयोगविरोधिविभागजनकं न तत्तदविरोधिविभागजनकमिति न व्यवस्था, किन्तु मूर्तमात्रविभागजनकममूर्तविभागं(३) न जनयतीति । एतावतापि विभागजविभागसिद्धिः(४) । तथाच द्रव्यारम्भकस्यापि(५)

(१) कारणविभागेन हीति–इति (क) (ख) पु० ।

(२) नाशमित्यर्थः—इति (ख) पु० ।

(३) अमूर्तवृत्तिविभागं—इति (क) पु० ।

(४) सिद्धेः—इति (क) पु० ।

(५) द्रव्यानारम्भकस्यापि—इति (क) पु० ।

तन्त्वंश्वन्तरतन्तुसंयोगस्य विरोधी विभागो द्रव्यारम्भकसंयोगविरोधिविभागजनकेन कर्मणा जन्यताम् मूर्तवृत्तित्वाव(१) न त्वाकाशतन्तुविभागोऽमूर्तवृत्तित्वादित्याशङ्क्य निराकरोति—**मूर्त्तामूर्त्तेति** । प्रत्यक्षेण तथा सहचारानवसायाद्द्वयाप्तौ मानाभावादित्यर्थः । **मूर्त्तेति**(२) । यदि नैवं तदा पद्मपत्रकर्मणाप्याकाशविभागो न स्यादिति(३) । तत्रापि विभागजविभागोऽङ्गीक्रियेतेत्यर्थः(४) । **आपरमाण्विति** । साक्षात्परम्परासाधारणद्रव्यारम्भकसंयोगविरोधित्वमात्रस्य विवक्षितत्वादित्यर्थः । **तस्मादिति**(५) ।

ननु द्वितन्तुकारम्भकांशुसंयोगस्य द्वितन्तुकपटे नासमवायिकारणत्वं समवायिकारणवृत्तेरेव तथात्वात् । नापि समवायितया । आरभ्यारम्भकवादनिषेधेन पटं प्रत्यंशूनामतत्त्वात् । नापि निमित्ततया । तन्तुत्वेनैवान्यथासिद्धत्वात् । तथाच द्रव्यासमवायिकारणतन्तुसंयोगविरोधिविभागजनककर्मणः कथमसमवायिकारणेतरसंयोगविरोधिविभागजनकत्वं विरोधात् ।

अत्राहुः । अंशुसंयोगः पटनिमित्तकारणम् । न च तत्र मानाभावः । अवयवावयवसंयोगविशेषादपि कार्यविशेषदर्शनात् ।

---

(१) मूर्तमात्रवृत्तित्वात्—इति (क) पु० ।

(२) मूर्तविभागजनकत्वेनेति—इति (क) पु० ।

(३) न जन्येतेति—इति (क) पु० ।

(४) नाङ्गीक्रियेतेत्यर्थः—इति (क) पु० ।

(५) तस्माद्द्रव्यारम्भकेति-इति (क) पु० ।

अकारणविशेषस्य च कार्यविशेषत्वात् । अतस्तदाश्रया अंशवो-ऽपि तत्कारणानि संयोगमात्रस्याकारणतया संयोगिविशेषितस्य तस्य कारणत्वात् । अन्यथा संयोगेनान्यथासिद्धमिन्द्रियाद्यपि प्रत्यक्षादौ कारणं न स्यात् । द्रव्यारम्भकसंयोगविरोधित्वेन च द्रव्यमात्रस्य निमित्तकारणसाधारणतया विवक्षितत्वात् । एतल्लभ्यत इति । क्रमेण तन्तोरंशुकर्म्मांशुविभागारम्भकसंयोगनाशतन्तु-नाशाः । अंशुकर्मकाले वीरणे कर्म्म । ततो विभागस्ततः संयोग-नाशोऽथोत्तरदेशसंयोग इत्युभाभ्यां स्वाश्रयनाशोत्तरदेशसंयोगाभ्यां तन्तुवीरणविभागो नाश्यत इत्यर्थः ।

परत्वनिरूपणावसर एवापरत्वनिरूपणमुपपादयति । परस्परे-ति । परत्वापरत्वयोरन्योन्यमाश्रयमवधिमपेक्ष्यैवोत्पत्तेः । परस्परसा-मग्रीनैयत्यात् । परस्परोत्पत्तित्ववद्व्यवहारविषयत्वज्ञापनमेव व्यु-त्पत्तिवैषम्यमित्यर्थः । मिलितस्यासम्भवं निराकुर्वन्नाह—यथायथ-मिति । निमित्तत्वमदृष्टादिष्वतिव्याप्तं मत्वाह—यद्विशिष्ट इति । लक्षणमिति । यद्यपि दिक्कृतकालकृतपरत्वापरत्वयोः शब्दमात्र-साधारण्यात् परापरव्यवहारयोर्नैकत्वम् अपेक्षाबुद्धिजन्यावि-भुवृत्तिमात्रवृत्तिगुणत्वव्याप्यजातिमत्त्वञ्च न लक्षणं परस्परलक्ष-णस्य परस्परास्मिन्नव्याप्तेः । तथापि भृङ्गग्राहिकया व्यक्तिविशेषं निर्दिश्य एतद्वृत्तिगुणत्वव्याप्यजातिमत्त्वं लक्षणमेकैकस्य । न च तादृशजातौ मानाभावः । सामग्रीवैलक्षण्येन कार्यवैजात्यस्यावश्य-कत्वात् । दिक्कालकृतयोः परत्वयोरपरत्वयोश्चाल्पीयस्त्वविषया-पेक्षाबुद्धिजन्यमूर्त्तमात्रगुणत्वेनोपाधिना एकगुणत्वम् । प्रमाण-

श्चेति। उक्तमेव प्रत्यक्षमित्यर्थः। ननु किञ्चिदवध्यपेक्षसंयुक्तसंयोगभूयस्त्वाल्पीयस्त्वविषयापेक्षाबुद्धिजन्यत्वात् परत्वापरत्वयोरावश्यकत्वाल्लाघवाच्च ताभ्यामेव परापरव्यवहारौ स्तां किं गुणान्तरकल्पनयेत्याह—संयुक्तसंयोगेति। प्रमातर्यपीति। ननु तादृशसंयोगाश्रयत्वे यत् प्रतीयात् तत्र परापरव्यवहारो न तु तदवधित्वेन प्रतीयमाने। प्रमाताऽपि यदा तादृशसंयोगाश्रयत्वेन ज्ञायते न त्ववधित्वेन तदा प्रमातर्यपि वाराणसीतः परोऽहमिति व्यवहारो भवत्येव। अत एवान्यत्राप्यवधौ संयुक्तसंयोगाविशेषेऽपि न परत्वाद्युत्पत्तिः। तथाच यदेव परत्वाद्युत्पत्तौ नियामकं तदेव व्यवहारनिमित्तमस्तु।

अत्राहुः। प्रमातात्मा न शरीरमिति विभक्तत्वात्तत्र व्यवहारानास्पदेऽपि तादृशसंयोगाश्रयत्वेन परव्यवहारापत्तिः। न च मूर्त्तत्वमपि तद्व्यवहारनिमित्तमस्तु। संयोगस्य सावधित्वाभावात्। इदमस्मात् संयुक्तमित्यप्रतीतेः। परत्वादेस्तु सावधित्वेन प्रतीतेः। परत्वादेरेकवृत्तितया प्रतीतेर्व्यासज्यवृत्तिसंयोगाद्भेदात्। संयोगभेदापरिगणनेऽपि परव्यवहाराच्च।

अन्ये तु संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वे नाकाशादिदेशापेक्षया, तेषामविशिष्टत्वादतीन्द्रियत्वाच्च। किन्त्वालोकादिमध्यवर्त्त्यपेक्षया। तथाचैकदिगवस्थितयोरेव द्वयोरेकस्य घनतरालोकवर्त्तिनः संयुक्तसंयोगस्य भूयस्त्वे यदपरत्वं विरलालोकमध्यवर्त्तिनः संयुक्तसंयोगाल्पीयस्त्वे यत् परत्वमुत्पद्यते तन्न स्यादित्याहुः।

ननु व्यवहारेति। अज्ञातात् कारणात् कार्योत्पत्तिनियमो

भवति व्यवहारविशेषश्च व्यवहर्त्तव्यविशेषं विना नेत्यर्थः । एवं सत्यनुमानमप्याहुः । घटः समानाधिकरणसंयोगासमवायिकारण-कैकवृत्तिगुणवान् मूर्त्तत्वात् पार्थिवपरमाणुवत् । दृष्टान्ते तादृशो गुणः पाकजो गन्धादिः ।

अयं पार्थिवः परमाणुरेतद्वृत्तिविशेषगुणभिन्नसंयोगासमवा-यिकारणकैकवृत्तिगुणाश्रयः पार्थिवत्वात् पार्थिवान्तरवदिति न युक्तम् । एकेनापरस्यान्यथासिद्धावुभयासिद्धेः । दिक्कालकृतत्वं कार्यमात्रस्येत्यतोऽन्यथा व्याचष्टे–दिक्संयोगेति ।

दिश एकत्वाद्विशेषासम्भव इत्यन्यथा व्याचष्टे–दिग्विशेषः कालादिति ।

दिशः स्वापेक्षया न विशेषः किन्तु कालापेक्षयेत्यर्थः ।

एवमिति । कालस्यापि दिगपेक्षया विशेषो न स्वापेक्षयेत्यर्थः ।

दिशि विशेषो दिगुपाधिलक्षणः ।

ननूत्पत्त्यभिधानप्रतिज्ञा व्यर्था, उत्पत्तेरेवाभिधातुं युक्तत्वा-दित्यत आह–शिष्याणामिति । ननु परत्वाधार इत्ययुक्तमपेक्षा-बुद्ध्यनन्तरं परत्वाद्युत्पत्तेरित्यत आह–भाविष्यादिति ।

तर्हि कारणाविशेष इति । दिक्कृतकालकृतपरत्वापरत्वयोः कार्ययोः कारणे विशेषाभावात् कथं विशेष इत्यर्थः ।

न हीति । दिक्कृतपरत्वादिविलक्षणपरत्वाद्यनुमेयत्वात् कालस्येत्यर्थः ।

अवर्त्तमानस्येति । यद्यप्यविद्यमानस्य समवायिकारणत्वा-भावेऽपि अवधित्वेन दोषाभावः, मृतापेक्षया वर्त्तमानस्य परत्वादि-

व्यवहारात् । तथापि परत्वापरत्वयोः परस्पराश्रयमवधीकृत्यैवोत्पादादविद्यमानस्य समवायिकारणाभावेऽवधित्वस्याप्यभावात् । मृतापेक्षया च वर्त्तमाने परत्वादिव्यवहारस्तथाविधापेक्षाबुद्धिविषयत्वगुणनिबन्धनः ।

ननु कालकृतपरत्वापरत्वयोर्मानाभावः । तथाहि परत्वापरत्वाश्रयाभिमतावच्छेदकाद्यसूर्यक्रिया प्रागभावसमानफलत्वालम्बना वा (?) अपरत्वधीस्तु परत्वावधाभिमतपिण्डसमानकालपदार्थध्वंसकालोत्पत्तिमत्त्वविषया तदुत्पत्तिकालाश्रयत्वे तदुत्तरकालत्वविषया वास्तु किं ताभ्याम् ।

मैवम् । प्रागभावोत्पत्त्यास्तदानीमतीतत्वे परत्वापरत्वयोर्वर्त्तमानताभावानुपपत्तेः । इदानीमयमेतस्मात् पर इति वर्त्तमानताभानात् प्रागभावादेरवध्यनिरूप्यत्वेन परत्वादेश्च सावधित्वेन तद्भिन्नत्वात् ।

केचित्तु । प्रतियोग्यन्यूनानतिरिक्तकालीनावधिकसामवायिक्रयावत्परत्वाश्रयसमानकालीनकादाचित्काभावत्वं प्रागभावत्वम् । अतः परत्वेनैव प्रागभावनिरूपणान्न तेनैवान्यथासिद्धिरित्याहुः ।

तन्न । गन्धानाधारकालानाधारत्वाभावेन प्रागभावनिर्वचनात् ।

बहुतरतपनेति । यत्प्रागभावावच्छेदकक्षणावच्छिन्नजन्म यदपेक्षया तद्विप्रकृष्टं यज्जन्मावच्छेदकक्षणध्वंसक्षणाधिकरणजन्म यदपेक्षया तत्सन्निकृष्टमित्यर्थः ।

अत्र केचिदाहुः । जन्मान्तर्भावो व्यर्थः । बहुतरतपनपरिस्पन्दावच्छिन्नत्वबुद्धेरेव परत्वोत्पादकत्वात् । एवञ्चानित्यद्रव्यापेक्षया

नित्यद्रव्येऽपि तादृशापेक्षाबुद्ध्या परत्वमुत्पद्यते । ज्येष्ठेऽतीते चिरं जीवतः कनिष्ठस्य न परत्वोत्पत्तिः । तत्प्रागभावकालावच्छिन्नत्व-बुद्धेरेव परत्वोत्पादकत्वादिति ।

**विप्रकृष्टत्वेनेति** । परत्वापरत्वयोरुत्पत्तिक्षणानव्यवहित-प्राक्क्षणवृत्तिविप्रकृष्टत्वसन्निकृष्टत्वाभ्यां प्राप्तत्वादित्यर्थः ।

**तस्मादिति** । द्रव्यनाशापेक्षाबुद्धिनाशयोरभावात् । पारि-शेष्येण संयोगनाश एव परत्वादिनाशक इत्यर्थः ।

**यद्यपीति** । एताभ्यां पर्यायशब्दाभ्यामभिधेया बुद्धिरित्यसा-धारणतया व्यवच्छेदकत्वात् पर्यायाभिधानमपि लक्षणम् । यद्यपि सङ्केतमात्राधीनप्रवृत्तयः शब्दाः सर्वत्र संभवन्ति तथापि प्रादेशि-कस्य सङ्केतस्यातथात्वेऽपि सर्वजनीन ऐश्वरः सङ्केतः शक्नोति बुद्धिं व्यवच्छेत्तुम् । तेनापि करणव्युत्पत्त्या बुद्धिज्ञानशब्दौ यद्यपि मनसि वर्त्तेते तथापि भावव्युत्पत्त्यात्र लक्षणम् । ननु बुद्धिज्ञानशब्दौ चैत्रादिपदवत् यत्र सङ्केत्येते तत्रातिव्याप्तिः । द्वादशेऽह्नि पिता नाम कुर्यादिति सामान्येन रूपेण तस्यापीश्वरसङ्केतविषयत्वादिति चेत् । बुद्धिज्ञानशब्दद्वयवाच्यत्वस्य विवक्षितत्वात् । द्वादशेऽह्नि पिता नाम कुर्यादित्यत्र विधेयगतसंख्यात्वेनैकत्वस्य विवक्षितत्वे नामद्वयस्यैकत्र तात्पर्यागोचरत्वात् ।

यद्वा । पर्यायशब्दाभिधानेन बुद्धिरिति लक्ष्यनिर्देशः । ज्ञानपदस्य स्वप्रवृत्तिज्ञानत्वनिमित्तज्ञानत्वजातौ तात्पर्यं तेन ज्ञानत्वं लक्षणम् । तत्सिद्धिश्चानुगतबुद्धेराश्रयासिद्धिं निवारयति ।

**तस्मिन् सतीति** । न च ज्ञानग्रहणसामग्र्यास्तद्ग्रहणोत्तर-

मपि सत्त्वादेकज्ञानधीपरम्परया विषयान्तरसञ्चारो न स्यात् । विषयान्तरधीसामग्र्याः प्रतिबन्धकत्वात् । कार्यदर्शनेन तथा कल्पनात् । **सांख्या हीति** । प्रथमः परिणाम आद्या विकृतिः । सत्त्वरजस्तमःसाम्यरूपायाः परिणामिन्याः सत्त्वभेदः प्रथमः परिणामो बुद्धिरन्तःकरणभेदः । सांख्यानां बुद्धिमनोऽहङ्कार-भेदेन तत्त्रैविध्यात् ।

**बुद्धेरिति** । बुद्धेस्त्रयोंऽशाः पुरुषोपरागविषयोपरागव्यापारा-वेशभेदात् । मयेदं कर्त्तव्यमित्यध्यवसायात् । तत्र मयेत्यतात्त्विको महच्चेतनयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपरागः ।

नीलादिष्विन्द्रियसन्निकर्षात् तत्स्वभावस्य महत्तत्त्वस्य नीला-द्याकारपरिणतिभेदोत्पादो मलदर्पणसम्बन्धवत् पारमार्थिको विषयोपरागः । पुरुषोपरागविषयोपरागाभ्यां कर्त्तव्यविषयस्य प्रतिभासात्तदधीनः करोमीत्यध्यवसायो व्यापारावेशः । तत्राद्योंऽशो बुद्धिर्द्वितीयो ज्ञानं तृतीयश्चोपलब्धिरित्यर्थः ।

**बुद्धिस्थामिति** । बुद्धेर्भावाष्टकसम्पन्नत्वात् सुखादिकं भावनान्तं तद्धर्म इत्यर्थः ।

**यदीति** । करणव्युत्पन्नस्यान्तःकरणवाचितयास्माभिरुप-गमादित्यर्थः ।

तद्भिन्नान्तःकरणे बुद्धिर्नास्ति मानाभावादित्याह—**ततोऽपीति** । भावव्युत्पन्नस्य बुद्धिशब्दस्य नान्तःकरणवाचिता, करण-फलयोर्भेदादित्याह—**बोध इति** । अन्तःकरणस्यातीन्द्रियत्वात् प्रत्यक्षाया बुद्धेर्भेदमाह—**स चेति** । ननु फलमपि महदन्तःकरणस्य

धर्मो धर्मधर्मिणोश्चाभेदादन्तःकरणाभिन्नं स्यादित्यत आह—अत एवेति। अहं बुद्ध इत्यनुभवस्य सर्वजनीनत्वादित्यर्थः।

स चायमनुभवो भ्रम इत्याह—न चेति। ननु बुद्धेरात्मधर्मत्वेऽनित्यधर्मानाश्रयत्वं कौटस्थाश्रुतिसिद्धं विरुध्यत इत्यत आह—न चैवमिति। नित्यत्वं कौटस्थ्यमनुक्तरूपम्। तच्च धर्मधर्मिणोर्भेदाद्धर्मानित्यत्वेऽपि न विरुद्धमित्यर्थः।

एतेनेति। बुद्धेरात्मधर्मत्वव्युत्पादनेन तद्वदभिमान आत्मनि ज्ञानाभिमानः। ज्ञानाभिन्नाया बुद्धेरात्मधर्मत्वे सिद्धे ज्ञानमप्यात्मवृत्तीति सिद्धमित्यर्थः।

अधिकामिति। बुद्धेरिति शेषः। परिभाषैवेति। "शब्दमात्रं न त्वर्थोऽधिक" इत्यादिना तस्याः समानतन्त्रनिरासादित्यर्थः।

स्वरूपकृत इति। साक्षात्कारित्वादित्यर्थः।

वैयधिकरण्यं परिहरति—अनन्तार्थत्वादिति। व्यासो विस्तारः।

यथार्थमिति।

ननु यथार्थज्ञानत्वं स्मृतावतिव्याप्तं यथार्थानुभवत्वञ्च संशयविशेषेऽतिव्यापकम्, अन्यतरत्वस्य वाशब्दार्थत्वात्, तस्य क्वचित् सत्त्वात्।

न यथार्थनिश्चयत्वम्। यथाऽर्थस्तथा ज्ञानमित्यर्थे यथाशब्दार्थसादृश्यस्य सर्वथैकदेशाभ्यामव्याप्त्यतिव्याप्तिभ्यामनुपपत्तेः।

नापि विशेष्यवृत्तिप्रकारत्वं निर्विकल्पकाव्याप्तेः।

नापि विशेष्यावृत्त्यप्रकारकत्वम्। एकैकविशेष्यावृत्तिनाना-

प्रकारकसमूहालम्बनाव्याप्तेः । न च प्रकारस्यैकविशेष्यवृत्तितया न विशेष्यावृत्तित्वम् । प्रमाऽप्रमारूपसमूहालम्बनाव्याप्तेः ।

न च यावद्विशेष्यावृत्तित्वं विवक्षितम् । एकैकविशेष्यवृत्ते-र्यावद्विशेष्यावृत्तित्वेन समूहालम्बनाव्याप्तेः ।

नाप्यबाधितानुभवत्वम् । बाधस्य प्रमात्वात् । नापि जाति-विशेषः । योग्यवृत्तितया तत्संशयानापत्तेः ।

प्रमात्वस्य नित्यानुमेयत्वात् । प्रत्यक्षत्वादिना सङ्करप्रसङ्गाच्च । उच्यते । यत्र यदस्ति तत्र तस्यानुभवः प्रमा । यद्यत्र नास्ति तत्र तस्यानुभवोऽप्रमा । अत एव रजतमिदमिति ज्ञानमिदन्त्ववति तदनु-भवात् प्रमा । रजतत्वाभाववति तदनुभवादप्रमा । न चाव्याप्यवृ-त्तिप्रमायामव्याप्तिः । भिन्नावच्छेदेन हि तत्र भावाभावयोर्वृत्तिः । तथाच यत्र यस्य भावो न तत्र तस्याभावः । अविद्यायाः पश्चादनुमाने विद्यापूर्वकत्वादिति हेतुः अविद्यायाः प्रथमविभागे लघुप्रतिपत्तिकत्वादिति हेतुः । धर्म्मांशे सर्वधियां यथार्थतया सकल-ज्ञानव्यापकत्वेन विद्याया गुरुप्रतिपत्तिकज्ञानत्वात् । सूचीकटाह-न्यायेनाविद्यायाः प्रथमं विभाग इत्यर्थः ।

अथेति । तर्कस्यायथार्थज्ञानत्वादविद्यायां तद्विभागो युक्त इत्यर्थः ।

संशयात्प्रच्युता इति । संशयो हि दोलायितानेककोटिकः । तर्कस्तु नियतां कोटिमालम्बत इत्यर्थः ।

प्रमाकरणनिष्ठः प्रमाणसहकारी न तु तत्समवेतः । अविज्ञात-तत्त्व इति । न विज्ञातं विशेषतो ज्ञातं तत्त्वं वास्तवं रूपं यस्यार्थ-

स्येति विशेषनिषेधात् सामान्यज्ञानलाभे धर्मिज्ञानं संशायकं लभ्यते। कारणोपपत्तिरिति । कारणं व्याप्यं तदुपपत्तिराहार्यारोपरूपा । परेणाभ्युपगतस्य हेतोर्निर्वह्नित्वस्य व्याप्यस्य य आरोपस्ततोऽनिष्टस्य निर्धूमत्वस्याप्रसञ्जनं तर्क इत्यर्थः ।

यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वे प्रवर्त्तेते । तथापि प्रमाणोपपत्तित इति तद्व्यवच्छेदः ।

अनियतजिज्ञासाविच्छेदेनेति । साध्यतदभावविषयकसमकोटिकजिज्ञासा निवृत्तेत्यर्थः ।

संशयस्य स्वनियतजिज्ञासात एव निवृत्तेः । संशयो हि विरोधिविषयकतया स्वसमानविषयामनुमितिं प्रतिबध्नाति । न हि विरोधिनो ज्ञानस्य निश्चयत्वं तन्त्रं किन्तु ज्ञानत्वमात्रं लाघवात् । एवं तज्जनिताऽनियतकोटिका जिज्ञासापि तत्प्रतिबन्धिका । तत्प्रतिबन्धकत्वे विरोधिविषयत्वमात्रस्यैव प्रयोजकत्वाल्लाघवादिति । तन्निवृत्तिस्तर्कादित्यर्थः ।

ननु विरोधिविषयत्वेऽपि संशयस्याव्यवस्थितकोटिकतया हीनबलत्वान्न प्रतिबन्धकत्वम् । अन्यथा तेन प्रतिबन्धादनुमानवत्तर्कोऽपि न प्रवर्त्तेत । न वा तर्कात् संशयनिवृत्तिः । वैषयिको हि विरोधस्तत्र तन्त्रम् । न च निवर्त्तनीयनिर्वह्नित्वादिकोटिविरुद्धविषयो यद्ययं निर्वह्निः स्यान्निर्धूमः स्यादिति तर्कः । अत एव साध्यविरोधिजिज्ञासापि नानुमितिप्रतिबन्धिका । तस्या अपि संशयवद्धीनबलत्वात् । तृतीयलिङ्गपरामर्शानन्तरं विरोधिजिज्ञासयानुमितिविलम्बे मानाभावाच्च । न च साध्यैककोटिका जिज्ञासा-

नुमितिहेतुः । सा तर्केण कोट्यन्तरेऽनिष्टमुपनयता जन्यते, तद्व्यतिरेकेऽप्यनुमित्युत्पत्तेः ।

मैवम् । कामिनीजिज्ञासोः धूमपरामर्शेऽप्यग्न्यननुमितेर्जिज्ञासाविशेषस्यानुमितिप्रतिबन्धकत्वे विरोधिविषयस्यैव तन्त्रत्वात् । एवं विरोधिनानाविषयस्य जिज्ञासा । तद्बोधकजिज्ञासानुसरणञ्च वास्तवकोटिप्रमाणप्रवृत्तावंशतः परिपन्थि । तत्र कोट्यन्तरे तर्केणानिष्टमुपनयता सा जिज्ञासापनीयते । इदमेव वक्ष्यति "न हि कुर्यामित्यादि ।"

इह भूतल इति । ननु तर्कस्य न प्रत्यक्षानुग्राहकत्वम् । तर्कं विनाप्युन्मीलिताक्षस्याभावधीदर्शनात् तत्प्रामाण्यानुग्राहकानुमानानुग्राहकत्वे तु अनुमान एव तत्त्वम् ।

मैवम् । प्रत्यक्षस्य घटाभाववति भूतले वर्त्तमानस्य विरोधिधीनिरासरूपोऽनुग्रहः क्रियत इति विरोधिधीपूर्वकप्रत्यक्षे सावधारणप्रत्यक्षविशेषे च तर्कापेक्षणात् ।

ननु यद्यपि नियतकोटिकजिज्ञासा ज्ञानेष्टसाधनताज्ञानेन जन्यते । तथाप्यन्वयव्यतिरेकाभ्यां तर्कोऽपि तद्धेतुः ।

यद्यपि च यथोक्ततर्कं विनाप्यनुमितिदर्शनाद्व्यभिचारेण तर्कस्तत्र न कारणम् । तथापि पुरुषप्रयत्नसाध्या यत्रानुमानप्रवृत्तिस्तत्रैतादृशस्तर्कः कारणम् ।

अनियतकोटीति । तर्कस्यारोपिता,व्यवस्थितसत्त्वौपाधिकसत्त्वविषयत्वेनानिश्चायकतया प्रमारूपत्वाभावादित्यर्थः ।

प्रमितहानिरिति । प्रमितस्य धूमस्य हानिरप्रमितस्य निर्द्धू-

मत्वस्योपगम इत्यर्थः । एवमन्यत्रापि । न्यायाङ्गतयेति । संशयव-
दिति शेषः । विरोधिनानार्थावमर्ष इति ।

नन्वेतत् स्थाणुः पुरुषश्चेति भ्रमेऽतिव्याप्तम् । विरोधे
भासमान इति विशेषणेऽपि धूमाभाववानयं यदि धूमवान्
स्यात् वह्न्यभाववानपि वह्निमान् स्यादित्यत्र तर्केऽतिव्याप्तिः ।
न च तत्र वह्न्यभावविशिष्टे वह्निवैशिष्ट्यं विषयः । संशये तु तुल्य-
वदुभयवैशिष्ट्यं विषयः । तथापि विरोध्युभयविशिष्टमिति शब्द-
जन्यज्ञानेऽतिव्याप्तिः । न च जिज्ञासाजनकं ज्ञानं संशयः ।
उपेक्षणीयसंशयाव्याप्तेः । योग्यतायाश्च तदवच्छेदकधर्मप्रतीता-
वप्रतीतेः । अनुव्यवसायेऽतिव्याप्तेश्च । नापि स्थाणुर्वा पुरुषो
वेति स्मरणाभावात् संस्काराजनकं ज्ञानं संशयः । तथाविध-
निश्चयेऽतिव्याप्तेः । तस्यापि किञ्चिदवच्छिन्ने ग्रहः ।

उच्यते । एकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशयः ।
न चैतन्निरुक्तजन्यज्ञानेऽतिव्याप्तिः । तत्र विरोधिनानाप्रकारकत्वस्य
प्रकारत्वात् । संशये च विरोधिनोरेव प्रकारत्वात् । विरोध्युभय-
विशिष्टमितिशब्दस्यायोग्यतया ज्ञानाजनकत्वात्तज्जनकत्वज्ञानेऽति-
व्याप्त्यभावात्तदेव वा लक्षणम् ।

ननु समानधर्मदर्शनात्तद्भिन्ने धर्मिणि कथं संशय इत्यत
आह—उभयेति । संशयस्य चेति । ननु कस्यचित् संशयस्य
सुखमात्रजनकत्वाद्धर्मजन्यत्वमपि ।

अत्राहुः । संशयो न संसारविरोधी । किन्तु य आत्म-
गोचरः । संसारविरोधीति दर्शयितुं दुःखपदं संसारे उपचर्य

संसारहेतुत्वेन धर्मस्याप्यधर्मत्वेनाभिधानम्। ज्ञातृधर्मेति। ज्ञातुरपि ज्ञेयत्वात् गोवृषन्यायेन विभागः। भ्रान्तोऽहमिति। यद्यप्ययमात्मधर्मिकः संशयस्तथापि ज्ञानधर्मिक एवोचितः। तथैवोपक्रमात्।

ननु समानधर्मज एव न संशयः। उपलब्ध्यनुपलब्धिविप्रतिपत्तीनामपि संशायकत्वादित्यत आह—एतदुक्तमिति। तद्विषयेऽपि समानधर्मसद्भावं दृष्टान्तेनाह—यथाहीति। व्याहतेति। ननु विप्रतिपत्तिर्विरुद्धधर्मविषयकः शब्दप्रयोगः। कारणेन कार्यस्य लक्षणात्। वादिगतायास्तस्याः परोक्षत्वात्। स च समानधर्मवद्धर्मिनिष्ठत्वेनाप्रतिसन्धीयमान एव संशयहेतुः। न। तस्यापि विषयविषयिभावेन सम्बन्धेन धर्मिनिष्ठतया प्रतिसंहितस्यैव संशायकत्वात्। अन्यथातिप्रसङ्गात्। ननु समानधर्मो न संशयमात्रे हेतुः। व्यभिचारात्। न। तद्विशेषे जातिकृतस्य तस्यासिद्धेः। कारणत्वग्रहात्तत्कल्पनेऽन्योन्याश्रयात्।

किञ्च। न तस्य स्वरूपतः संशायकत्वं किन्तु तत्सहचरितकोटिस्मारकतयेति तत्रैवान्यथासिद्धिः। न च कोटिस्मरणं तद्व्यापारः। केवलाददृष्टादपि कोटिस्मृतेः। अत एव स्मर्यमाणकोटिके संशये तत्कारणत्वमपास्तम्। तस्मात् कोट्युपस्थितिधर्मिज्ञानविशेषादर्शनान्येव संशयकारणानि।

मैवम्। उत्कटकोटिकसंशयस्यान्यथासिद्धेः। यत्र कोटौ भूयःसहचरितधर्मग्रहस्तत्रैवोत्कटत्वात्। तथाच तत्र विशेषे तत्कारणत्वादन्यत्रापि तत्र तथा। यद्वा वेगेन गच्छतस्तत्तत्कोटिस्मृतौ विशेषादर्शने च समानधर्मज्ञानाज्ञानयोः

संशयतद्भावाभ्यां तत्कारणत्वम् । केवलादृष्टस्मारितकोटिकश्च संशयो नास्त्येव येन तस्य बहिर्भावः स्यात् । सर्वत्र समानधर्मस्यान्वयादिदर्शनात् ।

ननु समानधर्मेषु समानशब्दो न सादृश्यार्थः । किन्तु साधारणार्थ इति स्थाणुपुरुषसंशयो न स्यात् । तयोः परिमाणस्यासाधारणत्वात् । तज्जातेश्चाद्रव्यवृत्तित्वात् ।

न । जातेरपि परम्परासम्बन्धेन द्रव्यवृत्तेः ।

सारूप्यज्ञानादिति । स्थाणुपुरुषसदृशोऽयमिति ज्ञानात् विरुद्धनानाप्रकारकज्ञानस्यैकस्मिन् धर्म्मिण्यनुभवसिद्धत्वादित्यर्थः ।

वाकारार्थश्च विरोधः ।

परस्परेति । आरोप्यारोपविषययोर्म्मिथो भेदार्थं वैधर्म्म्यमुक्तम् । सामर्थ्यानुपलब्धाविति । तोयजातीयस्य पिपासोपशमनसामर्थ्यानुपलब्धावित्यर्थः ।

तद्धेतुत्वासम्भवेनेति । इष्टानिष्टसामर्थ्यानुपलम्भसम्भवेनेत्यर्थः ।

अनुपलब्ध इति । आरोपणीय इत्यर्थः ।

आरोप्यज्ञानस्यारोपप्रयोजकत्वमुक्त्वारोपविषयज्ञानस्य तत्प्रयोजकत्वमाह—आरोपविषयेति । आरोप्यज्ञानेति । ननु सारूप्यं न सरूपसम्भ्रमहेतुर्म्मानाभावादिति, ज्ञातस्य तस्य हेतुत्वे तस्य भेदाधिष्ठानतया भेदग्रहात्तदनुपपत्तिः । न साधारणधर्म्ममात्रग्रहस्यारोप्यस्मारकतया प्रत्यक्षभ्रमे तन्त्रत्वात् । अन्यथा तद्विषयनियमानुपपत्तेः ।

न च विशेषाग्रहमात्रं तन्नियामकम् । अगृहीतविशेषेऽप्यसरूपे भ्रमादर्शनात् । अत एव सारूप्यस्यैकदेशकार्त्स्न्ये विकल्पोऽप्यपास्तः । आरोप्योपस्थापकत्वमात्रस्य प्रयोजकत्वात् । एवञ्च स्मर्यमाणारोपे सारूप्यग्रहः कारणम् । पीतः शङ्ख इत्यादौ च नयनादिसम्भिन्नपित्तपीतिमानमनुभूय शङ्खे तदारोपः । किञ्च । नात्र शङ्खे पीतगुण आरोप्यते । किन्तु शङ्खपीतगुणावारोपविषयौ संसृष्टत्वमारोप्यम् । तथाच संसृष्टस्वभावाभ्यां गुणगुणिभ्यां सारूप्यमारोपप्रयोजकम् । तच्चासम्बन्धाग्रहरूपमत्रास्त्येवेत्याह—न च पीतिमतिक्तत्वे इति । संसृष्टत्वस्यारोपे तस्य केवलान्वयितया तत्र विशेषादर्शनादित्यर्थः ।

न चैवं प्रतीतेर्भ्रमत्वानुपपत्तिः केवलान्वयिधर्म्मिविषयज्ञानस्य यथार्थत्वस्य नियमादिति वाच्यम् । संसृष्टविषयत्वे तथात्वे धर्मद्वयप्रकारत्वांशे भ्रमत्वात् ।

नन्वेवं शङ्खपीतगुणौ संसृष्टाविति धीः स्यात् । मैवम् । संसर्गस्य ससम्बन्धिकतया तन्निरूप्यत्वेनोपस्थितपदार्थेनैव तन्निरूपणात् । तथाप्यसंसर्गाग्रहस्य स्वरूपसत एवारोपहेतुत्वादारोप्यारोपविषयसारूप्यस्य च ज्ञातस्योपयोगात् ।

अत्राहुः । यत्र तादात्म्यारोपः तत्र सारूप्यं ज्ञातमुपयुज्यते संसर्गारोपे तु स्वरूपसदेव प्रयोजकमिति भवत्यसंसर्गाग्रहः सारूप्यम् । यद्वा । यत्र सारूप्यमेव दोषस्तत्रारोप्योपस्थापकतया सारूप्यमुपयुज्यते न तु यत्र पित्तादिर्दोषः । तत्रारोप्योपस्थितेरनुभवरूपायाः सम्भवात् । ननु दोषानैसर्गिककार्थ-

प्रतिबन्धका न त्वागन्तुककार्यजनका इति । ततो यथार्थज्ञानं मा जनिष्टायथार्थज्ञानन्तु कुत इत्यत आह—**न च दोषा इति** । स्वच्छत्वमभास्वररूपविरहः । व्यूहनं वाजीकरणम् । विष्टम्भनं गतिप्रतिबन्धः । ननु चक्षुर्म्मात्रग्राह्यत्वं पीतादौ तत्सामान्ये चास्तीति तदपि सारूप्यादारोप्येतेत्यत आह—**नियमादृष्टवशादिति** । यथा मण्डूकवसाञ्जनाद्दोषाद्वंश एवोरगभ्रमो नान्यत्रेति नियमस्तथा नियमादृष्टवशादत्राप्यारोपनियम इत्यर्थः ।

पारलौकिकपथदर्शनानुपायत्वात् पाखण्डदर्शनानामाह–**दर्शनप्रतिरूपकेष्विति** । तेष्वेव वेदबाह्येष्वेव ।

ननु नित्यद्रव्याविषयको भ्रमः केवलान्वय्यत्यन्ताभावप्रतियोगिमात्रविषयको न वेति विप्रतिपत्तृभ्रमः प्रमाविषयाविषयकः भ्रमान्यज्ञानान्यत्वात् आकाशवत् । न चाप्रयोजकत्वम् । तथाहि पुरोवर्त्तिनि रजते च न भ्रमत्वं तयोः सत्त्वात् किन्त्वेतयोर्वैशिष्ट्ये । तच्चासदेव । नेदं रजतमिति च कस्यापि न पुरोवर्त्तिरजते बाध्येते । अपि तु तयोर्वैशिष्ट्यं बाध्यमतो भ्रमे तदुपस्थितिरेव युक्ता । न हि कारणत्वं विषयत्वम् । अतीतत्वादेरपि तत्त्वात् । किन्तु स्वकारणाधीनः स्वभावविशेषः । स चासत्यपि विरुध्यत इत्यत आह-**इह विभ्रम इति** । भ्रमत्वञ्च नासद्विषयत्वं किन्तु सद्विषयत्वेऽपि । विशेष्यावृत्तिप्रकारकत्वात् । **किञ्चासदिति** । नाभावः तत्प्रतियोगि वा प्रमासाधारणत्वात् । नाप्यत्यन्तासदखण्डम् । तद्भाने कारणाभावात् । इन्द्रियाणां सन्निकृष्टार्थबोधकत्वात् । तदभावे व्याप्त्याद्यग्रहेऽनुमानाद्यप्रवृत्तेः । ननु सविषयकोऽयं भ्रमः ज्ञानान्यविषयको

न वेति विप्रतिपद्य भ्रमो ज्ञानान्याविषयको भ्रमान्यज्ञानान्यत्वात् व्योमवत्। न चाप्रयोजकत्वम्। तथाहि। यद्यपि रजतादेर्ज्ञानाकारत्वं नानुभवाद्व्यवस्थाप्यम्। स हीदमनहङ्कारास्पदं रजतमादर्शयति न त्वहं रजतमिति। तथापि नेदं रजतमिति बाधकप्रत्ययापनीते बाह्यस्य रजतत्वे ज्ञानस्यैवाकार इति निश्चीयते पारिशेष्यात्। आकारश्चाकारिणोऽभिन्नः भिन्नस्य विषयत्वेऽतिप्रसङ्गात् इत्यत आह—**एव ज्ञानाकारेति**। न च परिशेषः। नेदं रजतं न वा ज्ञानं रजतमिति बाधकस्याविशेषात्। यथा च ज्ञानभिन्नस्य विषयत्वं तथा च समानतन्त्रे व्यवस्थापितम्। ननु विवादाध्यासितानि भ्रमविषयविषयकवाक्यानि वचनदूषणाक्रान्तानि न वेति विप्रतिपद्य तानि तथा तद्विषयकवाक्यत्वात् संप्रतिपन्नवदित्यनिर्वचनीयख्यातिरेवास्त्वित्यत आह **विचारासहेति**। सद्विषयकत्वे बाधकादसद्विषयत्वे चाप्रवृत्तेः सत्त्वासत्त्वाभ्यामनिर्वाच्यतैव विचारासहत्वम्। **तथेति**। इहापि प्रवृत्त्यनुपपत्तिर्दूषिकेत्यर्थः। अनिर्वचनीयत्वञ्च न तावन्निरुक्तिविरहः। इदं रजतं नेदं रजतमित्यादिनिरुक्तेरनुभूयमानत्वात्। नापि सम्यङ्निरुक्तिविरहः। एतन्निरुक्तेरेव सम्यक्त्वासम्यक्त्वयोर्विरोधादिति भावः।

अस्तु तर्ह्यख्यातिः। तथाहि। ज्ञानत्वं व्यधिकरणप्रकारानवच्छिन्नवृत्ति न वा, तत्प्रसिद्धिश्च भेदाग्रहप्रसञ्जितायां रजतत्वप्रकारकशुक्तीच्छायामिति विप्रतिपद्य ज्ञानत्वं न विशेष्यावृत्तिप्रकारकवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्ववत्। न चेदमप्रयोजकम्। अन्यथाख्यातौ बाधकात् साधकाभावाच्च। तथाहि। प्रत्यक्षेणेद-

मिति शुक्तिर्गृह्यते, दोषात्तस्य शुक्तित्वं न गृह्यते। दोषात् तद्गतविशेषाग्रहात्। तन्मात्रश्च गृहीतं सादृश्यग्रहात् संस्कारोद्बोधाद्रजतस्मृतिं जनयति। सा च दोषवशात् दुष्टतत्तांशा तत एव ज्ञानद्वयाच्छुक्तौ रजतार्थी प्रवर्त्तत इत्येवमुपपत्तौ विशिष्टज्ञानोत्पत्तौ मानाभावात्। न चेयं शुक्तिस्तद्रजतमिति भेदाग्रहे प्रवृत्तिः। स्वरूपतो विषयतश्च तयोर्भेदाग्रहस्यापि प्रवर्त्तकत्वात्। लाघवात्त्वयाप्यारोपनियमार्थं तस्योपेयतयावश्यकत्वाच्च। न च रजते प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वादिहापि तत्सिद्धिः। प्रवृत्तिमात्रे भेदाग्रहे सतीष्टपुरोवर्त्तिज्ञानस्य हेतुत्वात् लाघवात् विशिष्टज्ञानस्य सतोऽपि गौरवेणाप्रवर्त्तकत्वादित्यत आह—**अन्यज्ञानादिति**। अयमभिसन्धिः। रजतज्ञानस्य शुक्तिविषयतां विना न तद्विषयकप्रवृत्तिजनकत्वं सर्वैरेवाद्यप्रवृत्तौ लाघवादुपस्थितत्वाच्च ज्ञानं स्वविषये प्रवर्त्तकमित्यनन्यथासिद्धकारणताग्राहकमानेनावधृतत्वात्। सर्वैरेव प्रथमं गृहीतत्वेन तस्य बलवत्त्वादिति। अतिप्रसङ्गं नियामकं शङ्कते—**प्रवर्त्तकज्ञानेति**। अतिप्रसङ्गस्थले भेदग्रहान्न प्रवृत्तिरित्यर्थः।

तर्हि निवर्त्तकस्याभेदाग्रहस्य सत्त्वान्निवृत्तिरपि स्यादिति युगपत् प्रवृत्तिनिवृत्ती स्यातामिति परिहरति—**निवर्त्तकेति**। अभेदग्रहो न प्रवर्त्तको येन तदभावान्निवृत्तिः स्यात्। किन्त्विष्टभेदाग्रहः सत्यरजतेऽपि प्रवर्त्तकः। इयांस्तु विशेषः। क्वचिदसत्त्वादेवेष्टभेदस्याग्रहः क्वचित् सतोऽपि भेदस्याग्रह इति नानियतहेतुकत्वम्। न चेष्टस्थले इष्टभेदाप्रसिद्धेर्न तदभावः। पुरोवर्त्तिनीष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभावस्य प्रवर्त्तकत्वादित्याह—**न वय-**

मिति । प्रवृत्तिस्थले प्रवर्त्तकेष्टभेदाग्रहवन्निवर्त्तकानिष्टभेदाग्रहस्य सत्त्वान्निवृत्तिरपि स्यादित्याह—**अस्मन्नय इति** । यदि चानिष्टा-द्भेदग्रहस्तदानिष्ट एवानिष्टभेदग्रहादन्यथाख्यातिः स्यादित्याह—**अन्यथेति** । अथानिष्टाभेदग्रहो निवर्त्तक इति प्रवृत्तिस्थले तदभा-वान्न निवृत्तिः तदा इष्टाभेदग्रहस्य प्रवर्त्तकस्याभावान्न प्रवर्त्तेतापीति शङ्कोत्तराभ्यामाह—**तथापीति** । न च स्वातन्त्र्योपस्थितानिष्टभेदाग्रहो निवर्त्तको न चानिष्टस्याभावविशेषणत्वोपस्थितेर्न्न तद्भेदाग्रहो निवर्त्तक इति वाच्यम् । अभावविशेषणत्वेनोपस्थितेः प्राक् तत्रापि स्वातन्त्र्येणानिष्टोपस्थितेः । यदि च भेदाग्रहात् प्रवृत्तिस्तदा क्वचि-दपि विशिष्टज्ञानं न सिध्येत्तत एव सर्वव्यवहारसिद्धेरित्याह—**न च सर्वत्रेति** ।अधिकस्तु पल्लवोऽन्वीक्षातत्त्वबोधे तात्पर्यपरिशुद्धिप्रकाशे चास्माभिः कृत इति नेह प्रतायते ।

**विशेष इति** । उपलब्धे धर्म्मिणि विशेषतोऽनुपलब्धकोटि-कमित्यन्वयः । यद्यपि घटोऽयमिति निश्चयोऽप्युपलब्धे धर्म्मिणि घटे भवति, विशेषतश्च नीलः पीत इत्यनुपलब्धकोटिकः । तथा-प्यनध्यवसायस्य सामान्यतो विरोध्युभयकोटिकत्वम् । घटोऽय-मित्यत्र न तथा । **अत एवायमिति** । विरुद्धनानाप्रकारकमेकध-र्म्मिकं ज्ञानं संशयः । अनुल्लिखितनानाप्रकारकमेकधर्म्मिकं ज्ञान-मध्यवसायः ।

यद्वा । सामान्यतो विरोधिनानाकोटिकं ज्ञानमनध्यवसायः । ननु पनसः स्विदयमिति ज्ञानं न संशयः । विशेषतो विरोधिको-ट्यनुल्लेखात् । नानध्यवसायः । अनुल्लिखितनानाप्रकारकावि-

रोध्युल्लेखे हि सः । अत्र च पनसस्य तदन्यस्य च किञ्चित्त्वेन कोटयुल्लेखात् ।

अत्राहुः । विशेषतोऽनुल्लिखितनानाकोटिकं ज्ञानमनध्यवसायः । अत्रापि विशेषतः कोटयुल्लेखो नास्ति । किञ्चित्त्वस्य सामान्यरूपत्वात् । किंस्विदित्यत्रापि तथा, विशिष्टस्योभयत्रापि सत्त्वात् । तत्र निश्चयसंशयभिन्ने तादृशज्ञाने किं मानम् । उच्यते । न तावज्जिज्ञासा निर्णयजन्या । अनुच्छेद्यापत्तेः । नापि संशयजन्या । विशिष्टकोटिद्वयानुल्लेखे तदभावात् । ततः संशयाभिन्नाजिज्ञासाजनकं ज्ञानमेषितव्यं तदेवानध्यवसायः ।

**व्यासङ्गशब्देनेति** । कारणवाचकशब्दस्य तत्कार्ये लाक्षणिकत्वादित्यर्थः। तस्य प्रयोजनत्वमाह-**घटेति** । नन्वेतद्विशेषनिश्चये सत्यपि भवतीत्यत आह—**विशेषनिश्चयाभाव इति** । **मात्रशब्देनेति** । मात्रशब्दस्य सामान्यवाचित्वादित्यर्थः । ननु सामान्येन रूपेण विशेषोऽपि निश्चीयत एवेत्यत आह—**विनिश्चय इति** । तर्हि निश्चयाभावो ज्ञानसामान्याभावेऽप्यस्तीत्यत आह—**निश्चयनिषेधेनेति** । एतदेव विशदयति—**सामान्येन हीति** । तर्ह्यनध्यवसायः कुत्रेत्यत आह—**का पुनरिति** । यद्यपीदं ज्ञानं न भ्रमस्तथाप्यनिश्चयमात्रेणाविद्यात्वम्—**अनुमानविषयेऽपीतीति** । ननु पनसवत् सास्नापि प्रत्यक्षैव प्राणिविशेषसम्बन्धित्वं पनसवत् पदवाच्यत्वं वोभयत्राप्यप्रत्यक्षमेव । न । चेष्टमानावयवस्य यत्राप्रत्यक्षत्वं तस्य विवक्षितत्वात् ।

उपरतशब्दस्य विनष्टमर्थं निवारयति—**स्वकार्यादिति** । तत्र हेतुमाह—**प्रलीनेति** । मनसः प्रलयाभावादाह—**निरिन्द्रियेति** ।

**इन्द्रियद्वारेणैवेति**। यथेन्द्रियव्यापारजे ज्ञाने चक्षुरादिना जानामीति तथेन्द्रियव्यापाराभावेऽपि चक्षुषा पश्यामीति ज्ञानमित्यर्थः। इवशब्दार्थं सादृश्यमाह—**पूर्वज्ञानेति**। क्वचिदिन्द्रियद्वारेणैवेति पाठः। तत्र ह्युपरतेन्द्रियवर्गस्य स्वप्नः कथमिन्द्रियद्वारेणैवेत्यत आह—**पूर्वज्ञानेति**। पूर्वज्ञानप्रत्यवेक्षकत्वमिन्द्रियद्वारकतानुव्यवसायः। तेनेन्द्रियद्वारेण यदनुभवनमित्यस्य व्याख्येयग्रन्थस्यायमर्थः। इन्द्रियद्वारेणैव योऽनुभवोऽनुव्यवसीयत इत्यध्याहारात्। एतदेव स्पष्टयति—**यत्रासत्यपीति**। संविष्टः सुप्तः—**तथापीन्द्रियद्वारकतेति**। यद्यप्येतावता स्वप्नानुव्यवसायस्यायथार्थत्वसिद्धौ शय्यायां संविष्टस्तिष्ठामीत्यनुव्यवसायात्मकस्वप्नस्य नायथार्थत्वं सिध्यति। तथापि स्वप्नत्वेन तत्रापि बाधितविषयत्वमनुमेयम् बुद्धिर्न साक्षात् प्रयत्नजननीत्यत आह-**इच्छेति**। वातादिजन्यशरीरस्पन्दव्यावर्त्तनार्थमाह—**चेष्टेति**। हृदयान्तर्म्मनःप्राप्तिं विना मनो न हृदयान्तर्निश्चलं तिष्ठति प्राप्तिपूर्वकत्वादवस्थानस्येत्यर्थः। पूरयति—**अन्तर्हृदयं प्राप्येति**। ननु निश्चलत्वं स्पन्दशून्यत्वं तिष्ठत्यर्थोऽपि सएवेति पौनरुक्त्यमित्यत आह—**सहसैवेति**। पूर्वग्रन्थेन सम्बद्धीकर्तुमुक्तं—पुनः **सहसैव न चलति**। **तदेतीति**। **अत्राप्यदृष्टकारितेति**।

ननु शरीरतदवयवक्रियैव प्रयत्नवदात्मसंयोगासमवायिकारणिका प्राणक्रिया तत्प्राणवहनाड्यभिघातादेव। तत्र हि प्रयत्नवदात्मसंयोगासमवायिकारणत्वेऽपि प्राणवहनाडीक्रियायाः प्रयत्नवदात्मसंयोगोऽसमवायिकारणं वाच्यः तस्याश्चेष्टात्वात्। तथा च

तदभिघातादेव प्राणक्रियोपपत्तौ तत्र प्रयत्नवदात्मसंयोगस्यासमवायिकारणत्वे प्रमाणाभावः।

अत्राहुः। प्राणक्रियायां प्रयत्नवदात्मसंयोगस्य नासमवायिकारणत्वं किन्तु कारणत्वमात्रं तच्च परम्परया कारणत्वेऽप्युपपद्यते। एवञ्चात्मप्राणसंयोग इति व्याख्येयग्रन्थस्यायमर्थः। प्राणवहनाड्या सममात्मसंयोगः प्राणक्रियायां परम्पराकारणं नाडीप्राणसंयोगोऽभिघाताख्यः प्राणक्रियायामसमवायिकारणमिति।

**एतेनेति**। शयनं ज्ञानविशेषः। तत्पदार्थः निरिन्द्रयप्रदेशावस्थितमनःसंयोगासमवायिकारणकं ज्ञानमित्यर्थः।

यद्वा। स्वप्नवहनाडीविशेषसंयुक्तमनोजन्यं ज्ञानमित्यर्थः। **यानान्हिकानिति**। आह्निकत्वेन दिनभवत्वेन यानर्थान् पश्यतीत्यर्थः। **न च ते तथेति**। न ते आह्निका इत्यर्थः।

**वाराणस्यामिति**। वाराणस्यधिकरणकः पुरुषः पाटलिपुत्रे पश्यति, पाटलिपुत्राधिकरणोऽहम्, एते च पाटलिपुत्रीयाः पदार्थाः वाराणसेया इति पश्यतीत्यर्थः। तेनाग्रेतनग्रन्थसामञ्जस्यं भवति। **अयमेवमाहेति**। यद्यपि लिङ्गोदाहरणप्रस्तावे शब्दोदाहरणं न युक्तं तथापि वैशेषिकाणां शब्दस्यानुमानान्तर्भावात् तथोक्तम्। **यद्यपि सर्वत्रेति**।

धातुदोषस्य सकलस्वप्नकारणत्वं वैद्यकादवगन्तव्यम्। ननु स्वयमनुभूतेषु प्रसिद्धेष्वित्यत्र पौनरुक्त्यम् अनुभवप्रसिद्धिशब्दयोरेकार्थत्वादित्यत आह—**स्वयमनुभूतेषु प्राप्तेष्विति**। सम्बद्धेष्वित्यर्थः।

भू प्राप्तावित्यस्यानित्यण्यन्तत्वेन रूपम् । ननु संस्कारधर्म्माभ्यामित्ययुक्तम् एतज्जन्माननुभूतविषयत्वेन एतज्जन्मसंस्काराभावात् । जन्मान्तरीयसंस्कारस्य च नियतविषये बालस्तनपानादावेव ज्ञानजनकत्वादन्यथातिप्रसङ्गादित्यत आह—**यदि पूर्वेति** । एवञ्च एतज्जन्मन्यननुभूतस्येत्यस्य एतज्जन्मन्यसाक्षात्कृतस्येत्यर्थः सम्पद्यते । एवमग्रेऽपि व्याख्येयम् । अत्यन्तार्थं व्याचष्ट—**आरोपितोऽपीति** । ननु स्वप्नमात्रे संस्कारस्य कारणत्वादत्यन्ताप्रसिद्धे कथं स्वप्न इत्यत आह—**संसर्गविषयश्चेति** । संसृज्यमानस्य प्रत्येकमनुभवोऽस्त्येवेत्यर्थः ।

**अत एवेति** । संसर्गस्याननुभूतत्वेन स्मृतेरसम्भवात् । पटीयसी बहुतरविशेषावगाहिनीत्यर्थः । स्वप्नस्य प्रत्यक्षयाम्यनुभवामीत्याद्यनुभवाद्बाधकाभावाच्चानुभवत्वमेवेति भावः ।

सामान्यज्ञानं विना न विभागावतार इति सामान्यलक्षणं स्मारयति—**यथार्थेति** । चतुर्विधेत्यनेनैव विभागस्य दर्शितत्वात् प्रत्यक्षेत्यादि पुनरुक्तमित्यत आह—**किंनामधेया इति** । प्रत्यक्षादिविद्याया नेतरव्यावर्त्तकत्वमिति व्याचष्ट—**लक्ष्यत इति** । अक्षाणामप्रतीतानामेव प्रत्यायकत्वाद्व्याचष्ट—**प्रतीत्य प्राप्येति** । अर्थेन सहेन्द्रियप्राप्त्या यज्ज्ञानं जायत इत्यर्थः ।

नन्वेवमव्ययीभावसमासे नपुंसकलिङ्गत्वात् प्रत्यक्षशब्दस्याभिधेयलिङ्गता न स्यादित्यत आह—**तदेतदर्थकथनमिति** । कथं तर्हि समास इत्यत आह—**प्रतिगतमिति** । तेन प्रादिसमासे प्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधादभिधेयलिङ्गता सि-

ध्यतीत्यर्थः । अन्ये तु । अक्षं प्रतीति विग्रहे समाससूत्राभाव इत्यत आह–**तदेतादिति** । अक्षपदवत् प्रत्यक्षपदे बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षजिति षच्प्रत्ययान्तस्याक्षिशब्दस्य प्रयोगस्तथा च वासनादिप्रत्यक्षाऽव्याप्तिरिति शङ्कां निराकर्तुमाह–**अक्षशब्दस्येति** । षडित्यस्य तात्पर्यमाह–**न त्विति** । सांख्यानां कर्मेन्द्रियैः पञ्चभिः सममेकादशेन्द्रियाणि बौद्धानां मनोऽनङ्गीकारात् पञ्चैव तानि, तन्निरासार्थं षट्कीर्तनमित्यर्थः । तत्रेन्द्रियलक्षणं सांख्यानां दूषयति–**उत्कटेति** । यत्तु लक्षणमिन्द्रियाणां तन्न पाय्वादावित्यत आह–**शरीरसंयुक्तमिति** । एतच्च यद्यपि घटादौ शरीरे चातिव्याप्तं, शरीरसंयुक्तत्वस्य शरीरवृत्तिसंयोगाश्रयत्वस्य शरीरे सत्त्वात् । तथापि शब्दव्यतिरिक्तोद्भूतविशेषगुणशून्याकाशसंयुक्तमिन्द्रियलक्षणम् । **तदेतदिति** । **प्रतिगतमक्षमित्यादि** । **स्मृतीति** । स्मृतिरपिमनोलक्षणमिन्द्रियं प्रतिगता, संशयोऽपि चक्षुरादिकं प्रतिगतस्तज्जन्यत्वात् । आदिशब्देनात्मानुमित्यात्मस्मृतीनामप्यात्ममनोलक्षणेन्द्रियार्थसंनिकर्षजत्वात्प्रत्यक्षत्वप्रसङ्ग इत्यर्थः । ईश्वरप्रत्यक्षाऽव्याप्तिश्चेत्यपि द्रष्टव्यम् ।

न च साक्षात्कारित्वे जातौ मानाभावः । चाक्षुषादिबुद्धौ साक्षात्करोमीत्यनुगतप्रत्ययात् । नापि व्यञ्जकाभावः । गोलकजत्वादेरेव तत्त्वात् । योगीश्वरबुद्धौ च धर्मिग्राहकं मानमेव तद्व्यञ्जकम् । गोत्वादाविव व्यञ्जकेऽननुगमस्यादोषत्वात् । प्रत्युत व्यञ्जकस्यानुगमे तत एवानुगतबुद्ध्युपपत्तौ जातौ मानाभावः । यत्त्वग्रे **एतदस्मदादीनां संयोगिनां त्वित्यादि** वक्ष्यति तज्ज-

न्यमस्मदादीनां योगिनां प्रत्यक्षमभिप्रेत्य ।

ननु प्रतिगतमक्षमिति केन सम्बन्धेन साक्षात्त्वस्य लक्षणत्वमित्यनुपपत्तावेकप्रकरणाम्नातत्वमेव सम्बन्धोऽस्तीत्याह—**तत्र बुद्ध्यधिकारेणेति** । महतीत्यत्र महत्त्वं नोपलक्षणं किन्तु विशेषणमित्यभिप्रेत्याह—**तेनेति** । ननु बहिरिन्द्रियजद्रव्यप्रत्यक्षं प्रति महत्त्वोद्भूतरूपवत्तयोः स्वरूपयोग्यतावच्छेदकत्वात् दण्डत्ववन्न सहकारित्वमित्यत आह—**अकारणत्व इति** । वस्तुतस्तादृशयोरपि विषयतया सहकारित्वादननुगतत्वेनावच्छेदकत्वादुभयरूपत्वेऽपि न विरोध इति भावः । तथापि यत्र तदुत्कर्षानुविधानं तत्र कारणत्वेऽपि बहिरिन्द्रियजद्रव्यसाक्षात्कारमात्रे तस्य कारणत्वे किं मानम् ।

अत्राहुः । यद्विशेषो यद्विशेषप्रयोजकस्तत्सामान्यमसति बाधके तत्सामान्ये प्रयोजकमिति व्याप्तेः अनेकद्रव्यवत्त्वस्य तत्त्वे मानमाह—**न च परिमाणेति** । तथा च परस्पराविनाभूतयोः द्वयोरप्यन्वयव्यतिरेकाभ्यां तुल्यत्वादुभयमपि कारणमित्यर्थः ।

वस्तुतो महत्त्वमेव कारणं लाघवात् । अनेकद्रव्यवत्त्वात् कार्यं विनापि तूलकादौ प्रचयस्योत्कृष्टमहत्त्वात् प्रत्यक्षोत्कर्षदर्शनाच्च । दूरस्थकेशादौ राशीभूते द्रव्यान्तरानुत्पादेन महत्त्वाभावेऽप्येककेशस्य सजातीयसंयोगेनानेकद्रव्यवत्त्वं तद्धेतुरिति चेत् । न । समवायेन तस्य प्रयोजकतया संयोगेनातत्त्वात् । दूरस्थग्रहे तस्य सजातीयसंयोगः सहकारीति चेत् । न । महत्त्व एव तथास्तु क्लृप्तत्वाद्विषयस्थं च रूपमुद्भूतं सहकारीत्याह—**रूपं चोद्भूतस्वभावमिति** । उद्भूतत्वं च रूपवृत्तिर्जातिविशेषः ।

न च तत्र मानाभावः । इन्द्रियालोकादिप्रत्यासन्नस्यावयविनो वायूपनीतस्य सुरभिद्रव्यस्याप्रत्यक्षत्वेन तिमिरस्थघटवत् साक्षात्कारकारणकिञ्चित्समवधानशून्यत्वानुमानात् । तच्च लाघवात् सामान्यरूपं न द्रव्यवृत्ति । ऊष्मप्रभयोः स्पर्शरूपग्रहे रूपस्पर्शग्रहापत्तेः तदेकार्थसमवायाविशेषात् । रूपस्पर्शयोश्च तद्भेदः । एकस्य ग्रहेऽप्यन्यस्याग्रहात् ।

न च रूपत्वादिना जातिसंकरः । तारत्वादिवन्नानात्वात् । रूपादिप्रत्यक्षतायामेकैकोद्भवत्वस्यैव तन्त्रत्वात् । **आलोक इति ।** एतच्चाक्षुषप्रत्यक्षमात्रे द्रष्टव्यम् । अन्धकारेऽपि त्वचा द्रव्यग्रहात् । सारूप्यज्ञानं भ्रमोऽपीति व्याचष्टे—**अविपरीतस्येति** । अनारोपितस्येत्यर्थः । **निर्विकल्पकं प्रत्यक्षमिति** । ननु तत्र प्रत्यक्षं न मानमसिद्धेरनभ्युपगमाच्च न व्यवहारः । तस्य सविकल्पकजन्यत्वात् । अथ गौरिति प्रत्यक्षं विशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवत् । न च परोक्षत्वमुपाधिः । प्रत्यभिज्ञाने साध्याव्यापकत्वात् । नापि विशिष्टविशेषणकत्वम् । पक्षेतरत्वात् । न च प्रतिबन्धासिद्धिः । साध्यादीनां विशेषणतया विशिष्टधीमात्रे विशेषणज्ञानमात्रस्य हेतुत्वात् । न । स्मृतिवत् प्रागनुभवस्य संस्कारद्वारा जनकत्वात् । न चाव्यवहितविशेषणधीजन्यत्वं साध्यम् । प्रत्यभिज्ञाने व्यभिचारात् ।

अथ जागराद्यविशिष्टज्ञाने संस्कारोद्बोधकमन्यत्र दृष्टं ज्ञानमेव कल्प्यते । न च तद्विशिष्टज्ञानमेव । तत्रापि विशेषणज्ञानापेक्षायामनवस्थानात् । न संस्कारोद्बोधत्वेन नियतो हेतुरिति ।

जागराहेतोरेव तथात्वकल्पनात् ।

नैवम् । प्राथमिकगौरितिप्रत्यक्षस्य जन्यावाशिष्टज्ञानत्वात् विशेषणज्ञानजन्यत्वानुमानात् । तज्जन्मनि गोत्वाननुभवेन संस्काराभावात् प्राग्भवीयसंस्कारोद्बोधको गोत्वेन्द्रियसंनिकर्षः कल्प्यते । आद्यप्रवृत्तिवत् सबलादिवदिति चेत् । तर्हि ततो गोत्वानुभव एव स्यात् । अन्यत्र तस्य हेतुत्वकल्पनात् । पूर्वं च विशेषणज्ञानाभावादर्थात्तन्निर्विकल्पकम् । तत्रापि ज्ञानत्वात्तद्विशिष्टज्ञानत्वानुमितिः स्यादिति चेत् । न । कारणबाधेन बाधादनवस्थानाच्च । विशिष्टज्ञानत्वादित्यत्र व्यावर्त्यस्याविशिष्टज्ञानस्याप्रसिद्धिः । ज्ञानत्वं च स्वतोऽसिद्धव्याप्तिकामिति चेत् । न । येन विशेषणेन विना व्याप्तिर्ग्रहीतुं न शक्यते तद्विशिष्ट एव व्याप्तेः । व्यभिचारवारकाविशेषणस्यापि सार्थकत्वे तस्यैव तन्त्रत्वात् । अत्रापि विशेषणं विनाऽनवस्थानादुव्याप्तेरग्रहात् ।

**विशेष्यज्ञानमिति** । विशिष्टज्ञानमित्यर्थः । **सहकारिविशेषमिति** विशेषणज्ञानं विशिष्टज्ञाने इन्द्रियार्थयोः सहकारीत्यर्थः । **तुच्छत्वादिति** । व्यावृत्तिमतोऽन्याया इत्यर्थः । **अत एवेति** । वस्तुविषयत्वादेव न निर्विकल्पकोपाधिकं साक्षात्त्वमित्यर्थः । **देशकालेति** । आकारः स्वरूपम् । तेनाग्रे स्वरूपविपर्यासनिषेधः संगच्छते । कुञ्चिका कपाटोद्घाटको लोहविकारविशेषः । तस्य विवरं तस्य कपाटमध्यसुषिरमित्यर्थः ।

**अस्थिरस्य स्थिरत्वेनेत्यादौ** यथासंख्यं क्षणभङ्गस्य भङ्गादित्यादि योजनीयम् । **विभ्रमादन्यत्रेति** । इन्द्रियाणां

विषयप्रतिनियमो हि प्रमामात्रे व्यवस्थितिः। अत एव मनसो बहिःस्वप्रजनकत्वं स्मृतिजनकत्वं चेत्यर्थः। कर्मत्वमैन्द्रियकवृत्ति न वेति विप्रतिपत्तावाह—**कर्म प्रत्यक्षमिति**। यदि कर्म न प्रत्यक्षं तदा कथं तत् प्रत्येतव्यमित्यत्राह—**संयोगविभागपरम्परैवेति**। तथा च तत्रैवेन्द्रियव्यापार उपक्षीण इत्यर्थः। युक्तं चैतत्। न हि संयोगविभागावजानन् कर्म प्रत्येति। रथस्य देशान्तरप्राप्तिं प्रतिसंदधानस्य रथिनो रथो मे गच्छतीति प्रतीतेः। सारथेस्तु देशान्तरप्राप्त्यप्रत्याकलने स्थिरत्वेनैव प्रतीतेः। न च चलतीति प्रत्यक्षात् कर्मविषयेत्याह। **यः पुनरिति**। न च तस्यानुमितित्वमसिद्धम्। कर्मप्रत्यक्षत्वेऽपि पूर्वदेशविभागोत्तरदेशसंयोगाभ्यां तद्व्यञ्जनीयम्। अत एव संयोगविभागौ न प्रत्यक्षौ। तत्र कर्मापि न प्रत्यक्षं भूकम्पादौ। तथा चोत्तरदेशसंयोगे सति कर्म नष्टमेव प्रत्यक्षं च वर्तमानविषयम्। किञ्च संयोगोऽपि ज्ञातो व्यञ्जकः, संयोगे चोत्पन्ने तत्साक्षात्कारः, तदनन्तरं च कर्मसाक्षात्कारदशायामव्यवहितप्राक्कालीनमपि कर्म नास्ति। संयोगसाक्षात्कारकाल एव कर्मणो नष्टत्वात् कर्म कथं प्रत्यक्षमिति भावः।

**व्यभिचारादिति**। सुखादिनेत्यर्थः। **समनन्तरसंयोगव्यवहितत्वादिति**। उत्तरदेशसंयोगानिवर्तनीयत्वादित्यर्थः। **व्यभिचारादिति**। विभागेत्यनुषञ्जनीयम्। उत्तरदेशसंयोगव्यङ्ग्यं न कर्म किन्तु पूर्वदेशविभागव्यङ्ग्यमिति नोक्तदूषणावकाशः।

विभागसाक्षात्कारस्तदुत्पत्त्यव्यवहितोत्तरक्षणे तत्काले च कर्मणः सत्त्वादिति भावः। परमाणुमात्रविवरवृत्तित्वादिति को-

ऽर्थः। किं परमाणुमात्रमेव विवरमवकाशो येषां जलस्यन्दानुमितसूक्ष्मावकाशानाम् अथवा परमाण्वाश्रयाणामित्यर्थः। आद्ये तत एव विभागेन व्यभिचारादेव। द्वितीयेऽसिद्धेश्चेति। **संयोगविभागयोरपीति**। एकस्यामपि कर्मव्यक्तौ संयोगविभागयोरुत्पन्नयोः संयोगविभागप्रत्ययः कुतो न भवतीति तुल्यमित्यर्थः।

**आश्रयामहत्त्वमेवेति**। ननु कालादिगुणेषु साध्याव्यापकमेतत्। न च कार्यमहत्त्वानधिकरणत्वं तदर्थः। गुरुत्वादौ साध्याव्यापकत्वात्। न च बाधोन्नीतस्य पक्षेतरत्वस्य विवक्षितत्वात् गतिरनुमीयत इत्यस्यानन्तरम् अनुमाय चलतीति शेषः। एवं तर्हि यथादित्यस्य देशान्तरप्राप्त्यनुमानेऽपि न चलतीति धीस्तथा चैत्रेऽपि न स्यादित्यत आह—**आदित्यादाविवेति**। **न तर्हीति**। तत्रापि देशान्तरस्याकाशादेरतीन्द्रियतया तत्प्राप्तेरज्ञाने तया गत्यननुमानात् खद्योतश्चलतीति धीर्न स्यादित्यर्थः। **तस्य भागैरिति**। खद्योतालोकभागैरित्यर्थः। एवं तर्हि सूर्यालोकसंयोगविभागाभ्यां गतिमनुमायादित्यश्चलतीत्यपि धीः स्यादित्याह—**गभस्तिमालिन इति**। **अव्यापकेनापीति**। खद्योततदालोकयोर्युगपत्सञ्चारितया नुद्यनोदकयोरिवाव्यापकेनापि खद्योतालोकेनापि खद्योतसंयोगविभागौ न प्रतीयेते इति। तत्रापि चलतीति प्रतीतिर्न स्यादित्यर्थः। किञ्च खद्योतवत् खद्योतालोकोऽपि गच्छतीति प्रतीतिरस्ति। न च खद्योतालोकस्य स्वावयवेन संयोगविभागौ स्त इत्याह—**अवयवावयवितयेति**। अपि च कर्मानुमितौ न संयोगमात्रं विभागमात्रं वा लिङ्गम्। तस्य श्येनवत् स्थाणावपि सत्त्वात्। नापि

मिलितादुत्प्रेक्ष्य निपतिते श्येने स्थाणौ चलतीति प्रतीत्यापत्तेः। तत्रापि संयोगविभागयोर्गत्यनुमानलिङ्गयोः स्थाणौ दर्शनाद्गत्यनुमानं स्यादिति चेत्। न। मम योग्यस्य कर्मणोऽनुपलम्भेनाभावनिश्चयेन बाधितविषयत्वात्। न तर्हि सूर्ये ताभ्यां गत्यनुमानम् स्थाणुनानैकान्तिकमिति चेत्। न। यो विभक्तः संयोगव्यभिचारी स कर्मवानिति व्याप्तिः। स्थाणुस्तु नैवम्। किञ्च। कर्मातीन्द्रियत्वेन कर्महेतोरेव संयोगविभागौ कृतं कर्मणा। चलतीति धीरपि तत एव भविष्यतीति भावः **आत्मसमवेतानामिति**। परबुद्धेः परंप्रत्ययोग्यत्वादित्यर्थः।

प्राभाकरः स्वप्रकाशपक्षसाधकमाह—**बुद्धिः स्वव्यवहार इति**। तत्र वर्तमानज्ञानव्यवहारो व्यवहर्तव्यभिन्नज्ञानसाध्यो न वा, उभयसिद्धप्रत्यक्षविषयो ज्ञानं मानसप्रत्यक्षविषयो न वेति संशयः।

अत्र सपक्षाभावान्नासाधारण्यम्। युक्तं चैतत्। वर्तमानज्ञानं स्वयमेव व्यवहारं करोति। स्वस्मिन् सत्येव स्वव्यवहारात्। न ज्ञानान्तरमपेक्षते। तदन्वयव्यतिरेकानुविधानाभावात्। ज्ञानान्तराभावदशायां स्वविरहादेव स्वव्यवहारविरहात्। स्वत एव व्यवहारोपपत्तौ ज्ञानान्तराकल्पनाच्च। इच्छादिकं तु न तथा। व्यवहारस्य ज्ञानजन्यत्वनियमेन इच्छादिव्यवहारे ज्ञानापेक्षणात्। अथ ज्ञानमात्रं न व्यवहारहेतुरतिप्रसङ्गात्, किन्तु व्यवहर्तव्यविषयमिति ज्ञानव्यवहारोऽपि तद्विषयकज्ञानाद्भवेदिति चेत्। न। स्वस्यैव स्वविषयत्वात्। यद्व्यवहारानुकूलशक्तियोगि यज्ज्ञानं तस्य तद्विषयत्वात्। न च व्यवहारस्य स्वाभिन्नज्ञानसाध्यत्वम्। गौरवादिति भावः।

**परेणेति** । परवेदनेत्युपलक्षणम् । स्वीयमप्यतीतमनागतं च स्वव्यवहारे ज्ञानान्तरमपेक्षते । व्यवहारकाले तेषामभावात् । ज्ञानान्तरान्वयव्यतिरेकानुभवाच्च । अथ स्वकीयं वेदनं वर्तमानं पक्षोऽतो न बाधक इत्यत आह—**तत्परिहारिणेति** । **विपक्षगामितयेति** । स्वकीयातीतानागतज्ञानपरकीयज्ञानागतत्वाद्वेदनत्वस्येत्यर्थः ।

**एतेनेति** । बाधेन विरुद्धत्वेन वेत्यर्थः । ज्ञानं च न स्वविषयं स्वजनकेन्द्रियप्रत्यासत्त्यनाश्रयत्वात् । विषयत्वनियामकेन्द्रियसन्निकर्षाभावे तु विषयत्वानुपपत्तेः । मनःसंनिकर्षाश्रयत्वे च मानसत्वं युक्तम् । विवादपदम् इन्द्रियजन्यं ज्ञानं नैतज्ज्ञानविषयः एतज्जनकेन्द्रियप्रत्यासत्त्यनाश्रयत्वात् असंनिकृष्टत्ववत् । चाक्षुषं ज्ञानं न चक्षुर्जन्यज्ञानविषयः चक्षुरसंनिकृष्टत्वात् व्यवहितघटवत् । ननु परप्रकाशकज्ञानमेव न सिध्येत् इन्द्रियसंनिकर्षादेः सर्वदा सत्त्वेन ज्ञानधारायामनवस्थानात् विषयान्तरसञ्चारश्च न स्यादित्यत आह—**अनवस्थाप्रसङ्गस्त्विति** । ननु संयुक्तसमवायेन मनोवेद्यत्वादपेक्षणीयान्तराभावाच्च कुतो वित्तिर्नावश्यवेद्या । सुखादितज्ज्ञानादिसामग्रीप्रतिबन्धात् । विषयान्तरसंचारदर्शनेन तस्या बलवत्त्वात् । अनुभवात् किञ्चिज्ज्ञानमयोग्यमित्यन्ये । अथ यथा तद्गुणसंविज्ञानसिद्धं कूटादिपदमशक्यमपि कूटं गुणमादायैव प्रधानमन्यपदार्थं बोधयति तथा ज्ञानमविषयमात्मानमादाय स्वविषयव्यवहारं करोति संस्कारं च । स्वजन्यव्यवहारविषये ज्ञानस्य संस्कारजनकत्वात् स्वजन्यव्यवहारविषयश्चात्माविषयश्चेति । न । अन्यत्र लाघवेन ज्ञानस्य स्वविषयव्यवहारसंस्काराजनकत्वात् व्यवहारसंस्कारयोः

स्वविषयज्ञानसाध्यत्वेन स्वविषयकज्ञानासाध्यत्वात् । सजातीयत्वानपेक्षत्वे साध्ये यदि प्रकाशकत्वं ज्ञानत्वमेव हेतुस्तर्ह्यसाधारण्यम् । अथालोकज्ञानसाधारणत्वं प्रकाशत्वं तर्ह्यसिद्धिरित्याह—प्रकाशकत्वादिति । बुद्धेः प्राकट्यानुमेयत्वं दूषयति—कार्यलिङ्गेति । नन्वपेक्षाबुद्धिभिन्ना घटबुद्धिर्घटनिष्ठधर्मचरमकारणं घटबुद्धित्वात् अपेक्षाबुद्धिवत् । न च भट्टैरपेक्षाबुद्धेर्द्वित्वाभिव्यञ्जकत्वाङ्गीकाराद् दृष्टान्तासिद्धिः । अस्माभिरपेक्षाबुद्धेर्द्वित्वादिजनकत्वेन तैश्च प्राकट्यजनकत्वेन व्याहृयङ्गीकारात् । एवं च घटविषयकबुद्धेः प्राकट्यजनकत्वे सिद्धे तद्दृष्टान्तेनापेक्षाबुद्धेरात्मविषयकबुद्धेश्च प्राकट्यजनकत्वमनुमेयम् । न । आद्यानुमानेऽपेक्षाबुद्धित्वस्योपाधित्वात् । ननु ज्ञातो घट इति विशिष्टप्रतीतेर्ज्ञातताख्यः संबन्धः सिध्येत् वर्तमानविषये बाधकाभावात् । न । अतीतानागतादेस्तदभावे ज्ञातव्यवहारानापत्तेः । तस्य ज्ञातताजन्यत्वात् । न च ज्ञानविषयावेव तद्धीविषयौ । वर्तमानेऽपि तथापत्तेः । प्रतीत्योर्विषयवैलक्षण्याननुभवात् ।

वस्तुतो जानामीति । मानसानुव्यवसायगम्यं ज्ञानं प्रत्यक्षम् अन्यथा सुखादिप्रत्यक्षत्वे कः समाश्वासः । क्षणिकात्मविशेषगुणत्वाच्च सुखवन्मानसप्रत्यक्षत्वमनुमेयम् । अन्यथा परमाण्वादिष्विति । ननु परमाणुवृत्तिः सत्तादिर्घटादौ प्रतीयत एव परमाणुवृत्तितया च तद्ग्रहः परमाणोरतीन्द्रियत्वेन तदप्रतीत्यैव न स्यात् । न । परमाण्वघटितसंनिकर्षेण स्वयोग्यतामात्रात् सत्तादिः प्रतीयतेत्यर्थात् ।

अन्ये तु । आश्रयाग्रहणेन सत्ता गृह्येतेत्यर्थः । परमाणुष्वपीति तु सत्ताया इन्द्रियसंनिकर्षनिर्वाहार्थमित्याहुः । रूपत्वादाविति । रूपत्वादिसिद्धिश्चान्वीक्षातत्त्वबोधे न्यायनिबन्धप्रकाशे च निपुणतरमुपपादिता । शब्दत्वादीत्यादिशब्दात् कत्वादिपरिग्रहः ।

ननु संयुक्तसमवायो न प्रत्यासत्तिः, आश्रयसंयोगादेव रूपादिग्रहोपपत्तेः, तथाश्रयाश्रयसंयोगाद्रूपत्वादिग्रहसंभवात् संयुक्तसमवेतसमवायोऽपि न प्रत्यासत्तिरित्याह—**किमनेनेति** । **वयं हीति** । यद्यपि शब्द इन्द्रियसमवेत एव गृह्यते न त्विन्द्रियसंबद्धसमवेतस्तथापि प्रायिकत्वेनाभिधानम् । वस्तुतो रूपसमवायिसंयोगे रूपसमवायस्य विशेषणत्वे हेतुत्वादुपलक्षणत्वे च संयुक्तद्रव्यमात्रस्योपलक्ष्यत्वे घटसंयोगात् पटरूपग्रहापत्तेरिति भावः । ननूक्तरूपा पञ्चैव चेत्प्रत्यासत्तिस्तर्ह्यभावः कथं प्रत्यक्ष इत्यत आह—**अभावस्य त्विति** । विशेषणता च द्विविधा । इन्द्रियविशेषणता इन्द्रियसंबद्धविशेषणता च । तत्राद्या शब्दाभावग्रहे अन्त्याऽभावग्रहे हेतुः । सा चेन्द्रियसंयुक्तविशेषणत्वादिभेदात् पञ्चविधा । ज्ञानसामान्यलक्षणे अपि प्रत्यासत्ती तत्रैवान्तर्भूते । योगजधर्मः प्रत्यासत्त्यन्तरम् । षोढा परिगणनं तु तदजन्यजन्यप्रत्यक्षाभिप्रायेण । तद्व्युत्पादनं चास्माभिस्तत्रैव निपुणतरं कृतमिति नेह प्रतायते । अस्मदादीत्यत्रादिशब्दस्य प्रकारवाचित्वादेकं प्रकारमाह—**अयोगिनामिति** । **न प्रत्यक्षैकहेतुतेति** । न प्रमारूपप्रत्यक्षैकहेतुत्वेनेत्यर्थः । तस्य प्रमाणगृहीतार्थविषयत्वात् । **तेषामिति** । यथा कर्मणामाशुविनाशित्वात् कालान्तरीयफलानुकूलो धर्मः कल्प्यते । तथा योगानुष्ठानस्यापी-

त्यर्थः । स्वस्यात्मनि ततोऽन्यस्मिन्निति । नन्वात्मनि श्रवण-मननश्रवणाच्चिन्तासन्ततेश्च साक्षात्कारजननस्य दृष्टत्वादात्मनि साक्षात्कारसंभवेऽप्याकाशगोचरश्चिन्तासन्तानेन साक्षात्कारो जन्यत इत्यत्र मानाभावः । तत्र श्रवणमनननिदिध्यासनाश्रवणात् । अथात्मसाक्षात्कारणात्मन्यनात्मभ्रमे निवृत्तेऽप्यनात्मन्यात्मभ्रमस्ता-वन्न निवर्तते, यावत्तत्र साक्षात्कारो न जायत इति चेत् । न । आत्मनि विशेषदर्शनेन यथात्मनि नानात्मारोपस्तथानात्मन्यात्मा-रोपो न संभवति । विशेषदर्शनाविशेषात् । अथात्मा चिन्त्यमान इतरभिन्नत्वेन चिन्तनीय इतीतरेष्वपि साक्षात्कारो जायते । न । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति सामानाधिकरण्यात् । यथा श्रवणं तथा मननं तथात्मा चिन्तनीयः । श्रवणादि चेतरभि-न्नत्वेनेत्यत्र न मानम् ।

अत्राहुः । श्रोतव्यः श्रुतिवाक्येभ्य इत्यसङ्कुचितस्वरसाद्या-वदात्मगोचरश्रुतिवाक्येभ्य आत्मश्रवणे श्रुतौ चेतरभिन्नत्वेनात्म-प्रत्यायनात्तथैव श्रवणमननादिकमपि तथोपस्थितामिति । तथैव निदिध्यासनसाक्षात्कारोऽपीतरेष्वा ( का ? ) शादिषु वाच्यः ।

यद्यपीति । तथा चास्मदादिप्रत्यक्षप्रस्तावे विषयतयात्मा किमिति नोक्त इत्यर्थः । चतुष्टयसंनिकर्षादित्यनेनेति । यदि चतुष्टयसंनि-कर्षोऽत्र विवक्षितः स्यात्तदेन्द्रियसंनिकर्षाभावे योगिनामात्मसाक्षा-त्कारो न स्यादित्यर्थः । कस्य चिदिति योग्यानुपलम्भनिराकरणा-र्थम् । योगजस्यापि धर्मस्येति । ननु योगाविषयकत्वेन योगजो धर्म आत्मसाक्षात्कारहेतुरस्तु परमाण्वादिसाक्षात्कारे कथं हेतुः ।

अत्राहुः । शब्दानेव शृणोति योजनशतादिति योगजधर्म-विशेषफलादन्यत्रापि योगजधर्मस्य साक्षात्कारजनकत्वम् ।

**स्वर्गादीनामिति**। यद्यपि स्वर्गिणां स्वर्गः प्रत्यक्ष एव तथापि मर्त्यलोकस्थातीन्द्रियत्वमभिप्रेत्योक्तम् । जन्यसविकल्पकाजन्यजन्य-साक्षात्कारविषयत्वमत्र साध्यमतो नोपनीतसाक्षात्कारेण सिद्धसाध-नम्। यद्यप्यनेन विमुक्तमात्रस्य सिद्धिर्न मुक्तस्य, मुक्तसाक्षात्कारस्य जन्यसविकल्पकजन्यत्वात् । तथाप्यागमात्तस्यापि सिद्धिः ।

धर्मिग्राहकमानबाधमङ्गीकृत्याह—**मीमांसका गुरव इति** । उत्तरप्रबन्धोपयोगार्थमाह—**नन्विति**।**स्वरूपालोचनमात्रमिति**। मात्रपदाद्विशिष्टविषयकत्वव्यवच्छेदः । यदि प्रत्यक्षं फलमात्रं विवक्ष्येत तदा तस्य पूर्वमुक्तत्वात् पौनरुक्त्यं स्यादिति विशिनष्टि—**प्रत्यक्षं प्रमाणमिति** । **सामान्यविशेषज्ञानमपीति** । निर्वि-कल्पकमपीत्यर्थः ।

दूषणं निरस्यति—**आलोक्यतेऽनेनेति** । तत्र मात्रपदव्यव-च्छेद्यं नास्तीत्यन्यथा व्याचष्टे—**स एवेति** । संनिकर्षोऽपि योगजः फलं भवत्येवेत्यत आह—**प्रमारूपामिति** ।

ननु कार्यस्य कारणसाध्यत्वे कारणस्यापि कार्यतया कार-णान्तरसाध्यत्वेऽनवस्था स्यादित्यत आह—**न चैवमनवस्थेति** । **संशयविपर्ययरहितामिति**। यद्यपि संशयविपर्ययात्यन्ताभाववद्वि-शिष्टज्ञानमपि भवति तथापि संशयविपर्ययभिन्नमित्यर्थः । तथापि सत्यं विशिष्टज्ञानमपि तथा भवत्येवेत्यत आह—**अव्यपदेश्यमिति**। तस्य विवरणं **शब्दाजन्यमिति** । ननु व्यपदिश्यतेऽनेनेति

व्यपदेशो नाम जात्यादि तत्कर्म व्यपदेश्यं तद्भिन्न भवति तदव्यपदेश्यं वैशिष्ट्यानवगाहीत्यर्थः प्रतीयते । तथा च सविकल्पकं व्यवच्छिद्येतेत्यत आह—शब्दाजन्यमिति चेति । तद्व्यवच्छेदार्थमिति ।

ननु व्युत्पन्नस्य शब्दश्रवणानन्तरं यद्गौरिति ज्ञानं तद्यदि शाब्दं तदा नेन्द्रियार्थसंनिकर्षजम् । अथ तज्जन्यं तदा न शाब्दम् । उभयजन्यत्वे जातिसंकरापत्तिः । अत्राहुः । प्रत्यक्षोपस्थिते धर्मिणि यत्र शब्दादितरधर्मवैशिष्ट्यं प्रतीयते तत्र परम्परेन्द्रियसंनिकर्षस्य प्रयोजकत्वेन प्रत्यक्षत्वं मा भूदित्येवपरमर्थव्यपदेश्यमित्युक्तम् । यद्यपि तदिति तद्गुणदोषमाध्यस्थ्यं, तस्य चेति तज्जातीयलिङ्ग-दर्शनस्य, तदिति प्रत्यक्षफलत्वमिति ।

यद्यपीति । ननु बुद्धेरत्र विभागः सा च फलमेव न तु करणं तत्कथं करणव्युत्पादनमत्र प्रसक्तम् । उच्यते । करणस्यापि बुद्धिरूपत्वसंभवात् करणव्युत्पत्त्याऽनेन च बुद्धेर्व्युत्पादनमेवात्र । शब्दादीनामप्यनुमानेऽन्तर्भाव एतत्सुनिश्चितार्थमनुमानमित्यादि भाष्यदर्शनाद्भावव्युत्पत्तिमुपजीव्य करणव्युत्पत्तावपि तात्पर्यं वा । लिङ्गं जन्यं तत्प्रत्यक्षमपि संभवत्यत उक्तम्—अनुमितिरूपामिति । ननु लिङ्गदर्शनात्संजायमानमिति लक्षणं संस्कारेऽतिव्यापक-मित्यत आह—बुद्ध्यधिकारादिति। संशयविपर्ययेति । ननु लिङ्गदर्शनस्य परामर्शस्यानुमितिचरमकारणत्वान्न ततः संशयः । न च सत्प्रतिपक्षस्थलेऽनुमित्यनुत्पादनात् ततः संशयः । तत्रापि संशयस्य साधारणधर्मदर्शनजतया लिङ्गदर्शनादनुत्पत्तेः ।

मैवम् । लिङ्गदर्शनविषयस्य साक्षात्कारिणः संशयस्य लिङ्गदर्शनजतया तस्य व्यवच्छेद्यत्वात् ।

ननु स्मृतिर्यथार्था नासम्यगर्थेत्यत आह—**स्मृतिरपीति** । रज्जुं सर्पतयानुभूय पलायितस्य तथैव स्मृतेरित्यर्थः । अत्र व्याप्तस्य पक्षधर्मतावैशिष्ट्यं लिङ्गत्वं, तद्विषयं ज्ञानं तृतीयलिङ्गपरामर्शः, तज्जन्योऽसाक्षात्कार्यनुभवोऽनुमितिः । अनुमिनोमीत्यनुगतानुव्यवसायाद्वानुमितित्वं जातिः ।

ननु संजायमानमिति वर्तमानतानिर्देशाद्वर्तमानज्ञानस्यानुमानता न त्वतीतस्यानागतस्य वेत्यत आह—**वर्तमानापदेशस्येति** । **निरुपाधीति** । अत्र पक्षधर्मत्वे सतीति द्रष्टव्यम् । **इतिकर्तव्यतेति** । इतिकर्तव्यता व्यापारः तद्वत एव करणत्वात् ।

**एतेनेति** । प्रमाणं त्वत्र धूमवानयमग्निमानित्यनुमितिः ज्ञायमानविशेषणजन्या विशेषणसमानकालाशाब्दविशिष्टज्ञानत्वात् दण्डी पुरुष इति प्रत्यक्षवत् । युक्तं चैतत् । लिङ्गज्ञानस्य प्रमात्वं विद्यमानलिङ्गविषयकत्वमतः परामृश्यमानस्यैव लिङ्गत्वम् । यत्र चातीतानागतयोर्लिङ्गत्वं तत्र यद्यपि कारणविशेषो लिङ्गं न सम्भवति । तथापि धूमप्रागभावध्वंसावेव तत्र लिङ्गे तयोरपि धूमवद्वह्निव्याप्यत्वात् । **यच्छब्दसापेक्षत्वादिति** । यच्छब्दस्योद्देश्याभिधायित्वात् तच्छब्दस्य विधेयाभिधायित्वादुद्देश्यविधेययोश्च मिथः साकाङ्क्षत्वादित्यर्थः । ननूद्देश्यविधेययोस्तथात्वेऽपि तद्वाचकपदयोः कथमाकाङ्क्षा, आकाङ्क्षायामपि तद्वाचकपदार्थमात्राकाङ्क्षास्तु, नियमेन तत्पदाकाङ्क्षा कथम् । उच्यते । तयोरेकस्मिन् शब्दादु-

पस्थितेऽपरस्यापि पदादेवोपस्थितिरन्वयबोधाङ्गमित्यन्यत्र व्यवस्थापितमिति पदजन्यपदार्थोपस्थितयोरुद्देश्यविधेययोः साकाङ्क्षत्वमिति तदुपस्थापकयोरपि साकाङ्क्षत्वम् । तत्रापि व्युत्पत्तिसिद्धोऽयमर्थो यद्यत्पदार्थोपस्थितमेवोद्देश्यमादाय तत्पदार्थस्य विधेयस्यान्वयः । एवं यत्पदार्थस्यापि तत्पदोपस्थापितमादायेति । **पक्षधर्मतेति** । सिषाधयिषाविरहसहकृतसाधकप्रमाणाभाववान् धर्मी पक्षः । व्यापकतावच्छेदकप्रकारानुमितिप्रतियोगिकविषयताश्रयः पक्ष इत्यन्ये । **एवं च सतीति** । यद्यपि पक्षैकदेशवृत्तिरपि पक्षवृत्तिर्भवत्येवेति न ततो भागासिद्धिनिरासस्तथापि बद्धमित्यनेन सम्बन्धमात्रलाभे **संशब्देन** सम्यक्त्वं पक्षव्यापकत्वं लभ्यते । ननु सिद्धमित्यत एव सपक्षवृत्तित्वे प्रशब्दात् प्रकर्षवाचिनः सपक्षव्यापकतारूपः प्रकर्षोऽवगम्यते, तथा च पक्षैकदेशवृत्तिर्हेतुर्न स्यादित्यत आह—**चशब्द इति** ।

**सपक्षेति** । निश्चितसाध्यवान् सपक्ष इत्यर्थः । तच्छब्देनानुमेयधर्मिपरामर्शेऽनन्वयादाह—**तच्छब्देनेति** । ननु विशेषसंज्ञायाः किं फलमित्यत आह—**एतेनेति** । उक्तलक्षणहीनत्वं बाधितसत्प्रतिपक्षितयोरप्यस्तीति तयोरपि लिङ्गत्वं स्यादिति विशिनष्टि—**कालात्ययेति** ।

ननु यत्र द्वितयत्रितयलिङ्गलक्षणव्यतिरेकस्तत्राप्येकलक्षणव्यतिरेक आवश्यक इति तावन्मात्रमेव लिङ्गाभासलक्षणमस्तु कृतं द्वितीयादिव्यतिरेकोद्भावनेनेत्यत आह—**एतेनैतदुक्तमिति** । **सिद्धे हेतुस्वरूप इति** । ननु सिद्धत्वं व्याप्तस्य पक्षधर्मत्वं तद्द्वय-

तिरेकश्चासिद्धत्वं तथा सिद्धे हेतुस्वरूपे विरुद्धादिदोषाणामवकाश इति व्याहतम् , न हि व्याप्तस्य पक्षधर्मत्वे विरुद्धादिसंभवः । नैवम् । असिद्धिरनुमितिकारणाभावरूपतया साक्षाद्दूषणं विरुद्धादयस्त्वसिद्ध्युपजीवकत्वेन । परम्परादूषणानामुपजीव्यत्वात् समानतन्त्रे प्रथममसिद्धिरुद्भावितेत्याशयः । **स्फुटप्रतिभास**मिति । उभयवादिसंप्रतिपन्नमित्यर्थः ।

**बलवदिति** । उपजीव्यमित्यर्थः । ननु संदिग्ध इत्यत्र संदिग्धपदं नानैकान्तिकवाचकमित्यपदार्थव्याख्यानमित्यत आह । **संदिग्ध इति** । यद्वस्तु यत्काले यत्कोटिकत्वेन संदिग्धं भवति न तत्काले तद्वस्तु तत्कोटावनैकान्तिकत्वेन निश्चिनोतीति संदिग्धपदं लक्षणयानैकान्तिकं ब्रूत इत्यर्थः । लक्षणमुदाहरणेन स्फुटयितुमाह–**स हि धर्मद्वयेत्यादिनापि विपक्षाद्व्यावृत्तिरित्यन्तेन** । नन्वनैकान्तिकं द्वाभ्यामपि लिङ्गलक्षणाभ्यां हीनं भवति तत्किं नोदाहृतं यथा जलहृदो धूमवान् वह्निमत्त्वादित्यादि । इदं हि पक्षावृत्ति सपक्षविपक्षवृत्ति चेति । न । स्वरूपासिद्ध्यसंकीर्णानैकान्तिकस्योदाहियमाणत्वात् । **विरुद्धास्त्विति** । यद्यपि विरुद्धस्त्रिभिरपि धर्मैर्विपरीतो भवति, यथाऽनित्यः शब्दोऽकृतकत्वादिति । अयं हि पक्षसपक्षावृत्तिर्विपक्षवृत्तिश्चेति । तथाप्यसिद्धासंकीर्णो विरुद्धोऽत्रोदाहियत इति नोक्तः ।

**द्वाभ्यां चेति** । ननु चाप्रमेयस्याप्रसिद्ध्या कुत्रासिद्धिर्निरूप्या । अत्राहुः । अप्रमेयत्वादित्यनेनावृत्तिराकाशादिर्हेतुत्वेन विवक्षितः ।

यद्यपि चेति । नन्वनुमेयः पक्षः क्वचिद्देशे काले च भवतीति देशकालनैयत्यमेवानुमाने । अत्राहुः । सर्वत्रानुमाने तयोः स्वरूपसतोरेव प्रयोजकत्वं ज्ञायमानयोः क्वचित्त्वमित्यभिप्रेत्योक्तम्—तथापि क्वचिदिति । यत्र देशविशेषकालविशेषविशिष्ट एव पक्ष इत्यर्थः । एतच्चेति । क्वचिद्देशकालप्रयोजकत्वम् । भूयो भूय इति । ननु भूयोदर्शनगम्या व्याप्तिर्न तु व्याप्तेर्भूयोदर्शनमनुमानोपयोगि । मैवम् । संवादेन यत्र व्याप्तिग्रहस्य प्रामाण्यं गृह्यते तदभिप्रायेणोक्तत्वात् । व्यतिरेकदृष्टान्तस्यापीति । एतच्चात्राप्रमाणत इत्यनुषङ्गाल्लभ्यते । अन्यथेति । हेत्वाभासस्यापि कालपानिकव्यतिरेकदृष्टान्तसंभवादित्यर्थः । इति व्युत्पत्त्येति सपक्षेऽप्रसिद्धोऽगृहीतव्याप्तिक इति व्युत्पत्त्येति योजनीयम् । किन्तु पक्षेऽसन्निति । न चैवं स्वरूपासिद्धस्यैव संग्रहे व्याप्यत्वासिद्धस्यासंग्रहः । तस्य पूर्वोक्तव्युत्पत्त्यैव लब्धत्वात् । चकारादिति । न च चकारादेवान्यहेत्वाभाससंग्रहात् कृतमनपदेशपदावृत्त्येति वाच्यम् । आवृत्तेनानपदेशपदेन लक्ष्याभिधानाच्चकारेण च कालात्ययापदिष्टप्रकरणसमयोर्लक्षणाभिधानात् । अप्रसिद्धपदेनेति । चकारेणेत्यर्थः। नन्वेवं हेत्वाभासलक्षणे तयोरुपग्रहेऽपि हेतुलक्षणपरसंग्रहश्लोके कथं तयोर्निराकरणमित्यत आह—प्रसिद्धं चेति । तयोः कालात्ययापदिष्टप्रकरणसमयोरित्यर्थः । आपातत इति बाधसत्प्रतिपक्षानुपजीवने । व्याख्यान इति बाधसत्प्रतिपक्षोपजीवने ।

ननु सत्प्रतिपक्षे व्याप्यत्वासिद्धिरपक्षधर्मता च नावश्यकी, सदनुमानस्यापि कदाचित्सत्प्रतिपक्षत्वात् ।

अत्राहुः। प्रसिद्धं च तदन्वित इत्यत्र प्रकर्षेण सिद्धं प्रसिद्ध-मित्युच्यते। प्रकर्षश्चायमेव यदसत्प्रतिपक्षितत्वमबाधितत्वं च। सर्वमसिद्ध एवेति। सर्वत्र हेत्वाभासे व्याप्तिपक्षधर्मताप्रमित्य-भावादित्यर्थः।

अधिकस्येति। अबाधितस्य चासत्प्रतिपक्षितस्य चेत्यर्थः। न वाच्येति। नोदाहर्तव्येत्यर्थः। निराश्रयस्य हेतोरिति।

ननु वन्हौ धूमो गमको न, गमकं च प्रमेयत्वमिति निरा-श्रयोऽपि हेतुरुपन्यस्यते विधीयते प्रतिषिध्यते च। अथ पक्षतां विना न हेतोर्गमकत्वं तर्हि बाधकत्वादिज्ञानव्यतिरेकेणापि न हेतोर्गमकत्वमिति तुल्यम्।

अत्राहुः। बाधसत्प्रतिपक्षत्वज्ञानाभावमात्रमनुमितिहेतुर्न बाधि-तत्वादिज्ञानमपि। पक्षधर्मताज्ञानं च सर्वत्रानुमितौ हेतुरिति विभाव-यितुं पक्षधर्मतोदाहृतेति।

तत्रानुमेयेनेति। यद्यप्येतदन्वयव्यतिरेकिण्यतिव्यापकम्। तथाप्यनेनोपाधिनाऽन्वयव्यतिरेक्यप्यन्वय्येव। लक्षणं तु अत्यन्ता-भावाप्रतियोग्यत्यन्ताभावाप्रतियोगित्वम्। एतावन्मात्रमनैकान्ति-केऽप्यस्तीति हेतुत्वेन विशेष्यम्। पदमेव चेति—अनुमेयेन सम्ब-द्धमित्येतावन्मात्रमेव चेत्यर्थः। एतदसाधारणानैकान्तिकेऽप्यस्तीति हेतुत्वेन विशेष्यम्। लक्षणन्तु पक्षवृत्तित्वे विपक्षव्यावृत्तत्वे च सति असत्प्रतिपक्षत्वमेव। समस्तान्त्विति। प्रसिद्धं च तदन्विते तदभावे च नास्त्येवेति द्वयविशिष्टमित्यर्थः। यद्वा। उभयव्याप्ति-रनेन साध्यसाधकत्वं तल्लक्षणम्। अबाधितसत्प्रतिपाक्षितत्वञ्च

समानम्। अन्वयव्यतिरेकाविति। सहचारदर्शनं व्यभिचाराद-र्शनश्चेत्यर्थः। यद्यप्येतत् केवलव्यतिरेकिणि केवलान्वयिनि च न सम्भवति। तथाप्यन्वयव्यतिरेकिणि तत्सम्भव इति तदभिप्रायेणैत-स्याभिधानम्। ननु न भूयोदर्शनगम्या व्याप्तिः। तथाहि न भूयांसि दर्शनानि व्याप्तिग्राहकाणि। एकत्रैव धारावाहिकेन तद्ग्रहापत्तेः। नापि भूयःसु स्थानेषु दर्शनम्। एकाश्रयाश्रितरूपरसयोस्तद-भावात्। नापि भूयसां दर्शनं गोत्वद्रव्यत्वयोस्तदभावात्। भूयो दर्शनेऽपि पार्थिवत्वलोहलेख्यत्वयोर्व्यभिचारे व्याप्त्यग्रहात्। अतः पारिशेष्यात् सकृद्दर्शनगम्यैव व्याप्तिः। उपाध्यभावस्य व्याप्ति-त्वात्। तस्य च केवलाधिकरणरूपतया चक्षुरादिना प्रथमदर्शन-गम्यत्वादित्यत आह–अन्वयव्यतिरेकाभ्यामिति। व्यापका-न्वयव्यतिरेकप्रयुक्तव्याप्यान्वयव्यतिरेकाभ्यामित्यर्थः। नन्वेवं प्रथमदर्शन एव व्याप्तेर्निश्चयादग्रे संशयानुपपत्तिरित्यत आह–शङ्कामात्रन्त्विति। व्याप्तिज्ञानेऽपि किं सन्नप्युपाधिर्मयोपाधित्वेन न ज्ञातः किं वोपाधिरेवात्र नास्तीति संशयात्तदुपपत्तेः। न ह्यग्रिम-संशयानुरोधात् पूर्वं व्याप्तिनिश्चयसामग्र्यामपि न तन्निश्चय इति युज्यते। घटसामग्र्यामपि तथा कल्पनापत्तेः। न चैवं प्रथमदर्शना-नन्तरमेवानुमितिः। उपाधिस्मरणसहकृतस्य योग्योपाध्यनुपलम्भ-स्यानुमितावुपाध्यभावव्यवहारे च कर्त्तव्ये व्याप्तिज्ञानसहकारित्वा-दिति भावः। नन्वेतावतापि सकृद्दर्शनगम्यत्वं न व्याप्तेर्निराकृतमि-त्यत आह–इदमत्रेति। यथा वह्निरिति। आर्द्रेन्धनवत्त्वमुपाधि-मादाय वह्निर्धूमेन सह व्याप्त इति तदभावेऽयं धूमवान् वह्निमत्त्वा-

दित्यत्र वह्निर्न धूमस्य गमक इत्यर्थः। यथाहारेति। मनुष्यश्यामत्वे शाकपाकजत्वस्यैव गमकत्वं न तु तद्विशिष्टस्य मैत्रतनयत्वस्य व्यर्थविशेष्यत्वादित्यर्थः।

ननु भूयांसि दर्शनानि प्रत्येकं न गमयन्ति। सकृद्दर्शनगम्यत्वापत्तेः। नापि मिलितानि। आशुविनाशिनां क्रमभाविनां मेलकासंभवादित्यत आह—भूयोदर्शनं हीति। यथा प्रत्यभिज्ञायां संस्कारसहितमिन्द्रियं हेतुस्तथा तावद्दर्शनजन्यसंस्कारसहितमत्रापि तथेत्यर्थः।

तथाहीति। विशेषैरवान्तरजात्यादिभिर्मणिः पद्मरागादिव्यवहारविषयो धारकस्य शुभाशुभजनकश्चानुमीयत इत्यर्थः। अनौपाधिकत्वज्ञानस्य व्याप्तिज्ञानहेतुतया साध्यसहचरितानामनुपाधित्वनिश्चयस्य साध्याव्यापकत्वसाधनव्यापकत्वनिश्चयसाध्यत्वात्तस्य च भूयोदर्शनसाध्यत्वादित्याह—ततश्चेति। ननु भूयो दर्शनं त्रिचतुरादिरूपतयाऽननुगतं न हेतुरित्यत आह—न चात्रेति।

इदमत्राभिसंहितम्। उपाध्यभावो नानौपाधिकः। यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मशून्यत्वस्य धूमेऽप्यसत्वात्। व्यभिचारिण्यपि गतत्वाच्च। प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मशून्यत्वस्य च सिद्ध्यसिद्धिभ्यां व्याहतत्वात्। किन्तु यावत्स्वव्यभिचारिव्यभिचारिसामानाधिकरण्यम्। तच्च न सकृद्दर्शनगम्यम्। किन्तु वस्तुगत्या या व्याप्तिस्तज्ज्ञानं नानुमितिहेतुरतिप्रसङ्गात्। किन्तु व्याप्तित्वेन। तच्चोपाधेरेव ज्ञाने तथात्वेन ज्ञानं संभवति।

विशेषणज्ञानं विना विशिष्टज्ञानानुत्पत्तेरिति । ननु तथाप्यनौपाधिकत्वं भूयोभिरपि दर्शनैर्ज्ञातुमशक्यम् । योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावानिश्चयेऽप्ययोग्यानामुपाधीनामभावस्य ग्रहीतुमशक्यत्वात् । अनुमानात्तद्ग्रहे तत्राप्यनौपाधिकत्वग्रहायानुमानान्तरापेक्षायामनवस्थानात् । तथा च भूयोदर्शनस्यापि संशायकत्वात्ततोऽपि न व्याप्तिग्रहः । इह समव्याप्तस्यैवोपाधित्वपक्षमाश्रित्य समाधिराचार्येणैव रक्ष्यते । विषमव्याप्तस्याप्युपाधित्वपक्षे व्यभिचाराभावज्ञानसहकृतं सहचारज्ञानं व्याप्तिग्राहकम् । न च सर्वेषां व्यभिचाराभावज्ञानं ज्ञातुमशक्यं स्वीयतया ज्ञानाभावज्ञानं च व्यभिचारिसाधारणमिति वाच्यम् । न हि व्यभिचारज्ञानाभावो ज्ञात उपयुज्यते । किन्तु स्वरूपसन्नेवेन्द्रियसहकारी । व्यभिचारज्ञानं च तन्निश्चयस्तच्छङ्काशङ्का च क्वचिदुपाधिसंदेहात् क्वचिद्विशेषादर्शनसहकृतसाधारणधर्मदर्शनात् । तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतः सिद्ध एव । न च तर्कव्याप्तिमूलत्वेऽनवस्था । यावदाशङ्कं तर्कानुसरणात् । यत्र व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः । तथाहि । धूमो यदि वन्ह्यसमवहितसामग्र्यजन्यत्वे सति वन्हिसमवहिततदजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं धूमो वन्हेरेव भविष्यति, क्वचिद्वन्हिं विनापि स्यादकारणक एवोत्पन्नः स्यादेवाशङ्का स्यात् । सर्वतस्तु क्रियाव्याघातः । यदि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत कथं नियमेन धूमार्थं वन्हिमुपाददीत । न हि यद्व्यतिरेके यस्योत्पत्तिराशङ्क्यते तदर्थं नियमतस्तदुपादीयत इति संभवति । न च केवलान्वयिनि व्यभिचारशङ्काया असम्भवः ।

अत्रापि साधनसमानाधिकरणात्यन्ताभावप्रतियोगि साध्यं न वेति तस्याः सम्भवात् । व्यापकतागोचरत्वेऽपि तस्याः समानसंवित्सं-वेद्यतया व्याप्यतागोचरत्वात् ।

अन्ये तु । काश्चिद्व्याप्तयः सर्वप्राणिसाधारणा अनादिसिद्धा एव । यथा कार्यकारणभावविरोधादिः । कथमन्यथा जातमात्रस्य स्तनपानादौ प्रवृत्तिः अहिते निवृत्तिश्चेत्याहुः ।

**तथाविधमिति** । यद्रूपावच्छिन्ने व्याप्यत्वं तद्रूपोपस्थितादनु-मितिः । तथा च धूमपदेन तादृग्धूमाभिधानं लक्षणया स्यात् । न च वादिवाक्ये लक्षणायां प्रमाणमस्ति । न हि तेन समीचीनमेव वक्तव्यम् । अज्ञानस्यापि संभवात् । अन्यथा हेत्वाभासेऽप्युक्ते सद्धेतुलक्षणया वादिभङ्गो न स्यादित्यर्थः ।

**प्रथमत एकमिति** । व्याप्तिग्रहणरूपमित्यर्थः । **दूरादिति** । यत्र धूमविषयक एव दूराद्वस्तुत्वेन परामर्शः, दैवाच्च धूमो वन्हिव्याप्य इति स्मृतेस्तत्र वस्तुगत्या यल्लिङ्गं तस्य ज्ञानं व्याप्तिस्मृतिश्चेत्येतावतोऽनुमितिहेतोः सत्त्वेनानुमित्यापत्तेरित्यर्थः ।

**द्वितीयस्त्विति** । तस्य पक्षधर्मताविषयत्वेऽपि व्याप्तिवै-शिष्ट्यविषयत्वादित्यर्थः ।

**लिङ्गत्वोल्लेखीति** । व्याप्तिविशिष्टपक्षधर्मस्य लिङ्गपरामर्श-स्तृतीय इत्यर्थः । तथा च व्याप्तिस्मृतिः करणं तृतीयलिङ्गपरामर्शो व्यापार इत्युक्तम् ।

अन्ये तु । क्रियया अयोगव्यवच्छेदेन संबन्धित्वस्य करणत्वाद्व्यापाराभावेऽपि तृतीयलिङ्गपरामर्शः करणमित्याहुः ।

ननु व्याप्तिस्मृतिः व्याप्यतावच्छेदकरूपेण, पक्षधर्मताज्ञानमित्येवानुमितिहेतुर्लाघवात् तृतीयलिङ्गपरामर्शहेतुत्वेनावश्यकत्वाच्च। तथा च धूमो वन्हिव्याप्यो धूमवांश्चायामिति ज्ञानद्वयादेवानुमितिरस्तु। न चैवं गोत्वादेरनुमितिर्न स्यात्। तत्रापि तदितरावृत्तित्वे सति तद्वृत्तित्वस्य धर्मान्तरस्य व्याप्यतावच्छेदकत्वात् पर्वतीयधूमे धूमत्वेन ज्ञाते वन्हिव्याप्योऽयं न वेति संशये तद्विपर्यये वानुमितिः स्यादिति चेत्। न। धूमो वन्हिव्याप्य इति स्मरतो धूमज्ञानस्य विशेषदर्शनत्वेन तयोरसिद्धेः। अन्यथा परामर्शस्याप्याप्यापत्तेः। अथ सामग्र्येव तत्र मानम् इन्द्रियसंनिकृष्टे धूमे व्याप्तिस्मृतिसत्त्वादिति चेत्। न। तत्र व्याप्याभेदप्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वेनानुमितेरेवोत्पत्तेः। अन्यथा तत्रापि परामर्शान्तरापत्तेः। इन्द्रियसन्निकृष्टेऽतीन्द्रिये च लिङ्गे तत्सामग्र्यभावाद्व्यभिचारः। न चानुमानात्तत्र लिङ्गपरामर्शः। तत्रापि तदपेक्षायामनवस्थापत्तेः। उच्यते। पक्षधर्मस्य व्याप्यत्वज्ञानमनुमितिहेतुः लाघवादुपजीव्यत्वाच्च। न तु तस्य व्याप्यतावच्छेदकप्रकारकज्ञानम्। गौरवात्। न च तस्यानुमितिः पूर्वमसिद्धौ युगपदुपस्थित्यभावान्न लाघवावतारः। यत्र व्याप्तिधूमत्वयोर्वैशिष्ट्यं प्रथममेव प्रत्यक्षेण युगपत् पक्षधर्मे भासते शब्दाद्वा तत्र उभयोर्युगपदुपस्थितेः। न चैवमतिरिक्तविशिष्टधीकल्पनायां गौरवम्। सिद्ध्यसिद्ध्योर्व्याघातेन फलमुखगौरवस्यादोषत्वात्। किञ्च वन्हिव्याप्यवानिति शाब्दज्ञाने व्याप्यतावच्छेदकधूमत्वाद्यज्ञानाद्व्याप्यत्वज्ञानसत्त्वात्तदेवानुमितिकारणम्। न च वन्हिव्याप्यमपि व्याप्यतावच्छेदकं

वन्हिहनिरूपितधूमाद्येकैकवृत्तिव्याप्तेः सकलधूमादिव्याप्यतावच्छेद-कत्वादाश्रयभेदेन व्याप्तिभेदादिति वाच्यम्। सकलधूमादिवृत्ति-व्याप्तौ मानाभावात्। यत्र वन्हिव्याप्यस्तत्र वन्हिरिति व्याप्तिबुद्धा-वेकैकवृत्तिव्याप्याश्रयस्यैव विषयत्वात्। अतीन्द्रियेऽसंनिकृष्टे लिङ्गे व्याप्तिस्मरणधूमत्वज्ञानसहितेन मनसा तदुत्पादनमिति।

ननु व्याख्येयग्रन्थेऽग्न्यध्यवसायो भवतीत्यभिधानात्तद्विरोध इत्यत आह—**अग्निरध्यवसीयत इति**।

भावव्युत्पत्तिपरित्यागे हेतुमाह—**तत्परमिति**। अग्निज्ञान परम्। तद्भवति परामर्शज्ञानं भवतीत्यर्थः। ननु तत्परत्वमेवास्य कथमित्यत आह—**प्रमाणमिति**। ननु द्वितीयलिङ्गदर्शनस्यानुमित्य-व्यवहितप्राक्कालतयानुमितिजनकत्वे को दोष इत्यत आह—**यद्य-पीति**। **जिज्ञासावशादिति**। ननु धूमनिवृत्तौ परामर्शो न प्रत्यक्षे-णेन्द्रियासन्निकर्षात्। नाप्यनुमानेन। तस्य परामर्शजन्यत्वेन सोऽपि परामर्शो धूमविषयक एव केन जननीयः। नानुमानेनैव। अनवस्था-नात्। न च व्याप्तिपक्षधर्मताबुद्धिभ्यामेव तज्जननम्। प्रमाणान्तर-त्वापत्तेः। नापि तत्सहकृतेन मनसैव। तस्य बहिरस्वातन्त्र्यात्।

अत्राहुः। प्रमेयत्वादावतीन्द्रिये ज्ञानोपनीतत्वेन व्याप्तिग्रहः तत्रापि लिङ्गपरामर्शः। **तेन वाक्यस्येति**। तस्य परामर्शोत्थापक-त्वादित्यर्थः। हेतुवाक्यस्य पक्षधर्मतारहितलिङ्गमात्रोपस्थाकत्वा-द्वादिवाक्यस्य सिद्धत्वेनोपपत्त्यनाक्षेपकत्वात्। परार्थानुमाने उपन-यस्य पक्षधर्मताप्रतिपादनमेव व्यापारः। स्वार्थानुमाने तु द्वितीय-लिङ्गदर्शनादेव तल्लाभान्न परामर्शोपयोग इत्याह—**पक्षधर्मतेति**।

न च तदनुमानेति। यो धूमवान् सोऽग्निमानिति केवलव्याप्तिज्ञाना-दनुमित्यनुत्पत्तेरित्यर्थः।

**उपनयार्थ इति**। व्याप्तिविशिष्टस्य पक्षधर्मत्वमित्यर्थः। अनौ-पाधिकः सम्बन्ध इति। यद्यप्यनौपाधिकत्वस्य साध्यव्यापकसाध-नाव्यापकधर्मशून्यत्वज्ञाने व्यापकज्ञानस्य व्याप्यज्ञानसापेक्षतया न परस्पराश्रयः। तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वस्य व्यापकत्वात्। नापि प्रतियोगित्वस्य विरोधित्वात्तस्य च सहानवस्थाननियम-रूपत्वादात्माश्रयः। न हि प्रतियोगित्वं विरोधित्वम्। गोत्वाश्व-त्वयोर्विरोधेऽपि प्रतियोगित्वाभावात्। किन्तु भावविरहात्मकत्वम्। तथापि यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं व्यभि-चारिण्यपि। नापि प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं तत्। तादृशधर्मज्ञानं विना तदभावानिरूपणे सिध्यसिद्धिव्याघा-तात्। यावद्वन्हिमत्त्वव्यापके धूमवत्त्वाव्यापकत्वं यावद्धूमवत्त्वा-व्यापके वह्निमत्त्वव्यापकत्वमिष्यत इति चेत्। न। तादृशधर्मनिषे-धस्य व्यधिकरणतया धूमत्वेऽनुपयोगात्। साध्यव्यापकव्याप्यत्वे चात्माश्रयात्। साध्यं यावदव्यभिचारि तदव्यभिचारित्वं तदिति चेत्। न। साध्याव्यभिचारित्वस्यैव प्रयोजकत्वे शेषवैय-र्थ्यात्। न चेष्टापत्तिः। साध्यवद्भिन्नसाध्यात्यन्ताभाववदवृत्तित्वस्य केवलान्वयिन्यसंभवात्। नापि स्वसमानाधिकरणात्यन्ताभावाप्रति-योगिसामानाधिकरण्यं व्याप्तिः। यत्किञ्चिद्वन्ह्यत्यन्ताभाववति धूमस्य वृत्तेः, संयोगादेरव्याप्यवृत्तेर्द्रव्यत्वाद्यव्याप्यतापत्तेः। न च संयोगित्वं द्रव्यव्याप्यम्। संयोगस्यैव तत्सम्बन्धस्याव्याप्य-

वृत्तित्वात् । नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्क-त्वम्। साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्त्वस्येति षष्ठ्यर्थो न व्याप्यव्यापकभावः । व्याप्यत्वस्याव्याप्यनिरुक्तेः । नापि ज्ञाप्य-ज्ञापकभावस्तदर्थः । व्यभिचारिसाधारण्यात् ।

अथ संबन्धमात्रं व्याप्तिः । व्यभिचारिसंबन्धस्यापि केन-चिद् व्याप्तित्वात् । धूमादिव्याप्तिस्तु विशिष्यैव निर्वक्तव्येति चेत् ।

इदं व्याप्तिस्वरूपं निरूच्यते व्याप्तिपदप्रवृत्तिनिमित्तं वा ?

नाद्यः । तृतीयलिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे-ऽस्यार्थान्तरत्वात् । सम्बन्धमात्रज्ञानादनुमित्यनुत्पत्तेः । नापरः । संबन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात् । नाप्यविनाभावः । केवला-न्वयिन्यभावात् । नापि कात्स्न्र्यसंबन्धः । न हि कृत्स्नस्य साधनस्य साध्येन संबन्धः । कस्या अप्यग्निव्यक्तेः सकलधूमसंबन्धाभा-वात् । नापि कृत्स्नस्य साध्यस्य साधनेन संबन्धः । कस्यापि धूमस्य कृत्स्नवह्निसंबन्धाभावात् । उच्यते । यावत्स्वव्यभिचारि-व्यभिचारिसामानाधिकरण्यमनौपाधिकत्वम् ।

वस्तुतो यत्संबन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः । धूमस्य वन्हिसंबन्धित्वे धूमत्वमेवावच्छेदकम् । धूममात्रस्य वन्हिसंबन्धात् । वन्हेस्तु धूमसंबन्धित्वे न वन्हित्वमवच्छेदकम् धूमासंबन्धिनि गतत्वात् । किन्त्वार्द्रेन्धनप्रभववन्हित्वम् । तादृशं व्याप्यमेव । अधिकस्तु पल्लवोऽन्वीक्षातत्त्वबोधे न्यायनिबन्धप्र-काशे चास्माभिः प्रदर्शित इति तत एवाधिगन्तव्यः ।

**अयमपीति। अनौपाधिकः संबन्ध इत्यर्थः। तन्निदानीभू-**

तेति। अव्यभिचारज्ञानानिदानीभूतेत्यर्थः। नन्वनौपाधिकत्वमुपाध्यभाव इति कथं तेनैव तन्निश्चयः। मैवम्। अनौपाधिकत्वविशिष्टः संबन्धो व्याप्तिरिति विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वात्।

**आकस्मिकत्वेति**। यदीदं कार्यमकारणकं स्यात् कादाचित्कं न स्यादित्यर्थः। **निःस्वभावत्वेति**। एतद्व्यतिरिक्तवृत्तिधर्मशून्योऽयं यद्येतद्व्यभिचारी स्यात् एतद्धर्मवान् न स्यादित्यर्थः। **ताभ्यामिति**। येनोपायेन तादात्म्यतदुत्पत्ती गृह्येते तेनैव प्रतिबन्धोऽपि गृह्यत इत्यर्थः। **तयोरेवेति**। तादात्म्यतदुत्पत्तिव्याप्यत्वं प्रतिबन्धस्येत्यर्थः। **ते एवेति**। तादात्म्यतदुत्पत्ती एवेत्यर्थः। तयोर्व्याप्यव्यापकाभिमतयोरित्यर्थः। **उपाधिदर्शनाद्वेति**। यथोपाधिनिश्चयेऽपि व्यभिचारसंशयस्तथा वक्ष्यामः। भूयो भूयः सहचरितयोः पार्थिवत्वलोहलेख्यत्वयोरित्यर्थः।

चतुर्थविकल्पस्याद्यं विकल्पं दूषयति—**तत्रेति**। व्यभिचारशङ्काप्युपाधिदर्शनादिति दूषयति—**व्यभिचारशङ्कापीति**। तच्छङ्कया वेति पक्षं दूषयति—**अतीन्द्रियाणामिति**। **प्रमाणपथेति**। तादृशशङ्कया तदुत्पत्तेरप्यनिश्चयान्न ततः प्रतिबन्धनिश्चय इत्यर्थः।

भूयो भूय इति चरमं पक्षं दूषयति—**सहचरितयोरिति**। सिद्धौ सिद्ध्यर्थमित्यर्थः। तादात्म्यतदुत्पत्ती एव प्रतिबन्ध इति दूषयति—**विशेषस्त्विति**। अवश्यं हि प्रथमपक्षनिराकरणपरत्वमस्य वाच्यम्। अन्यथा प्रतिबन्धग्राहकतादात्म्यादेरननुगमस्य तद्ग्राहकचक्षुर्लिङ्गादिवददोषत्वात्। तादात्म्यस्य गमकत्वं दूषयति—**तादात्म्यं चेति**। नियामकमाशङ्क्य दूषयति—**संयोगित्वेति**।

द्वितीयं पक्षं निराकर्तुमाह—**न च समानेति** । **प्रतिबन्धानिश्चयोऽपीति** । प्रतिबन्धकतादात्म्यतदुत्पत्तीनामेकोपायनिश्चेयत्वेन प्रतिबन्धनिश्चये तदुत्पत्त्याद्यनिश्चयो न स्यात् । तन्निश्चये च प्रतिबन्धानिश्चयो न स्यान्न चैवमित्यर्थः । **यदनतीतामिति** । वर्तमानसाध्यावभासितानुमितेः । अन्यथा तदर्थिनः प्रवृत्तिर्न स्यादिति भावः

तृतीयं पक्षं दूषयति—**न च तयोरेवेति** । न च भेदे सतीति तादात्म्यव्यावर्तनायोक्तम् । तथा च रसाद्रूपानुमानेऽपि तदुत्पत्तिरस्त्येव । तल्लक्षणसत्त्वादिति भावः ।

**स चेदिति** । स कार्यकारणभावस्तद्रूपो व्याप्यव्यापकभावरूप इत्यर्थः । **अन्यथाभ्युपायमाहेति** । यादृशेन पूर्वरूपेण जनितो रसस्तादृशमेव पूर्वरूपमनुमापयति । स च रसः । समानकालीनं यद्रूपं तज्जनकेन जनिते तादृशे कारणे रूपेऽनुमीयमाने विशेषणतया रससमानकालं रूपं सिध्यति । प्रयोगस्तु । रसो रससमानकालरूपजनकरूपजन्यो रसत्वादित्यर्थः ।

यद्यप्याद्यः पक्षः पूर्वमेव निराकृतस्तथापि दूषणान्तरमाह—**न च ते एवेति** । **अभिन्नाध्यवसेयेति** । अध्यवसेयशिंशपावृक्षरूपमेकं स्वलक्षणमित्यर्थः । **स यदीति** । स्वलक्षणभेदे तद्वृत्तिव्यावृत्त्योरभेदेऽतिप्रसङ्गादित्यर्थः । ननु यदा स्वाभाविकत्वावधारणमनौपाधिकत्वेन तदा तद्व्यतिरेकोऽप्युपाध्युद्भावननियतः स्यान्न चैवमित्यत आह—**यद्यपि चेति** ।

ननु सोपाधाववश्यं व्यभिचार इति नास्ति । साधनाव्याप-

कसाध्यव्यापकोपाधौ पक्षधर्मतामात्रव्यतिरेकात् । यथा तौतातित (क?) दिशा नित्यः अद्रव्यद्रव्यत्वादित्यत्र बहिरिन्द्रियाग्राह्यत्वमुपाधिः । मैवम् । साध्यव्यापकसाधनाव्यापकोपाधिमादाय विचारात् । **व्यभिचारे चावश्यमिति** । ननु व्यभिचारादेवागमकत्वे व्यभिचारादुपाध्यनुमानं व्यर्थम् । अत्र व्यभिचारिण्येकत्र साधने साध्यतदभावसंबन्धोऽवच्छेदभेदं विना नेति साध्यसंबन्धितावच्छेदकमेकमवश्यमिति तदेवोपाधिरित्यस्मत्पितृचरणाः ।

**तथापीति** । यद्यपि यद्यव्यभिचरितः सबन्धो व्याप्तिः स्यात् तदा व्यभिचारस्यैव व्याप्त्यभावत्वे तन्निश्चयार्थमुपाध्युद्भावनमनुपयुक्तं स्यात् । न चैवम् । किन्तु निरुपाधिः संबन्धो व्याप्तिरित्युक्तम् । तथापि निश्चितेऽपि व्यभिचारे व्याप्तिभङ्गायोपाधिरवश्यमनुसर्तव्यः । तथा च व्यभिचारेऽवश्यमुपाधिसत्त्वाद्व्यतिरेकानिश्चयेन सामान्यत उपाधौ निश्चिते विशिष्य तदनुसरणं व्यर्थम् । तस्य व्यभिचारस्य तदर्थत्वादुपाधिनिश्चयादित्यर्थः । वस्तुतस्त्वव्यभिचरितः संबन्धो व्याप्तिर्लाघवात् । अनौपाधिकत्वं तु तल्लक्षणमिति व्यभिचारस्य साक्षान्निश्चये उपाध्यनुसरणं व्यर्थमित्येवंपरो ग्रन्थः । न चैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धः स्यान्न त्वाधिक इति वाच्यम् । साध्याभाववद्गामित्वं हि व्यभिचारस्तदभावश्च नाव्यभिचारः । केवलान्वयिन्यभावात् । किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि साध्यसामानाधिकरण्यम् । न चानयोः परस्पराभावरूपत्वम् ।

नन्वेवमुपाधिरासिद्ध्युपजीव्यत्वेन सव्यभिचारवद्धेत्वाभा-

सान्तरं स्यात् । न तु व्याप्त्यभावत्वेनासिद्धिः ।

मैवम् । उपजीव्यत्वेऽपि स्वतो दूषकत्वाभावात् । न ह्यन्यस्य साध्यव्यापकसाधनाव्यापकताज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने स्वतःप्रतिबन्धकम् । व्यभिचाराज्ञानस्य तद्धेतुतया तज्ज्ञानस्य तथात्वात् । तथा च व्यभिचारज्ञानजनकतया स दूषक इति दूषकतायां परमुखनिरीक्षणत्वादसिद्ध्युपजीव्योऽप्युपाधिः सिद्धसाधनवन्न पृथक् हेत्वाभासः ।

**अस्फुटश्चेति** । यथोपाधेर्व्यभिचारोन्नायकत्वेन दूषकत्वं न तु स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया तथा वक्ष्यामः । **ननु तद्भाव एवेति** । योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावनिश्चयेऽप्ययोग्यानां तेषां कथमभावः प्रत्येतव्यः । अनुमानान्तरेण तदवगमेऽनवस्थानादित्यर्थः ।

**प्रमाणपदवीमिति** । यद्यप्युपाध्यभावः कथं निश्चेय इति प्रश्ने नैतदुत्तरं प्रमाणपथावतीर्णस्योपाधेः शङ्कनीयत्वेऽप्युपाध्यभावानिश्चयस्य तादवस्थ्यात् । तथाप्युपाध्यभावनिश्चयाभावः किमुपाधिशङ्काया दुष्परिहरत्वेन तद्ग्राहकमानाभावेन वा । द्वितीयमग्रे दूषणीयम् ।

आद्यं दूषयति–**प्रमाणपदवीमिति** । ननु प्रमाणपथावतीर्ण एवोपाधिः शङ्क्यतां तथाप्यवान्तरविशेषो नास्ति व्यभिचारशङ्कायाम्, तथा च कथं व्यभिचारशङ्कयाऽनुमानमित्यत आह–**तदयमिति** । **व्यभिचार एवेति** । व्यभिचारे साध्याभाववद्वृत्तित्व इत्यर्थः न त्वनैकान्तिके । तेन बाधविरुद्धयोरपि व्याप्त्यभावः सिद्ध्यति ।

यद्वा—उपाध्यभावो व्याप्तेर्लक्षणमित्युक्तं व्याप्तिस्त्वव्यभिचरितः संबन्धः। तथा च व्यभिचार इति प्रथमान्तमेव। **साधने सोपाधिरिति**। ननु साध्ये सोपाधिरप्युपाधिर्भवत्येव यथा पर्यवसितसाध्यव्यापकः, तत्र यद्यपि पर्यवसितं साध्यमप्रसिद्धं तथापि साध्ये यत्पर्वतीयत्वादिकं पर्यवस्यति तद्व्यापकः स्यात् तद्व्यतिरेकाच्च पर्वतीयत्वव्यतिरेक उन्नेतुं शक्यते।

मैवम्। व्यभिचारोन्नायकस्योपाधेरत्र लक्षणीयत्वात्। व्यापकानामाकाशादीनामुपाधित्वे समव्याप्तिकोपाधिपक्षमाश्रित्य दूषणमाह—**वन्हेः सार्वत्रिकत्वेति**। एवमग्रेऽपि। विषमव्याप्तिकोपाधिपक्षे साधनव्यापकत्वं तेषामिति भावः। **नित्यानामिति**। परमाण्वादीनामित्यर्थः। अत्रापि विषमोपाधिपक्षे साधनव्यापकत्वमेव दोषोऽभिप्रेतः। **उभयेति**। साधनं साध्यं चेत्युभयम्। उभयव्याप्ता इत्यर्थः। यद्यप्युभयाव्यभिचार्यनित्यः प्रमाणपरिदृष्टो नैयायिकानामप्रसिद्धः महानसादीनामुभयव्यभिचारित्वात् वह्निमत्त्वस्य चोपाधेर्नित्यत्वात्। तथापि व्रीहिरेव वह्निव्यापकस्तथाभूतः प्रसिद्धः। अभेदेऽपि व्याप्यव्यापकभावादिति भावः।

**तत्रेति**। प्रथमे साधनव्यापकत्वात्। द्वितीये साध्याव्यापकत्वादित्यर्थः। **धूममात्रेति**। मात्रशब्दोऽत्र सामान्यार्थो न तु व्यवच्छेदार्थः। वह्निधूमयोर्व्याप्त्यभावापत्तेः। **पूर्व इति**। साधनव्यापकत्वादित्यर्थः। **व्याप्यमात्रेति**। मात्रपदेन वह्निव्यापकत्वनिषेधः। तथा च साध्याव्यापकत्वमित्याह—**पूर्व इति**। **उभयरूपा इति**। साध्यव्याप्यत्वे सति साध्यव्यापक इत्यर्थः। **सा चेति**।

यद्यपि स श्यामो मैत्रतनयत्वादित्यत्र शाकपाकजत्वं सामग्र्येवोपाधिः । तथापि यत्र साध्यसामग्र्या सह साधनव्याप्तिस्तत्र साधनव्यापकत्वात् सामग्री नोपाधिः । यत्र तु तन्नास्ति तत्र सामग्र्युपाधिरेव । न च तेनैव हेतुना शाकपाकजत्वमपि साध्यम् । तत्र श्यामत्वस्योपाधित्वात् । उभयस्यापि साधने चार्थान्तरत्वम् । श्यामत्वमात्र एव विप्रतिपत्तावुभयत्राप्यविप्रतिपत्तेः । ग्रन्थस्तु सामग्री क्वचिन्नोपाधिर्यत्र साधनव्यापिकाऽन्यत्र तूपाधिरेवेति योजनीयः ।

धूमस्येति । धूमाद्वन्ह्यनुमाने न वह्निसामग्र्युपाधिः । वह्निरेव तत्सामग्र्यापि सह धूमस्यानौपाधिकत्वनिश्चयेन साधनव्यापकत्वनिश्चयात् । मैत्रतनयत्वं व्याप्य स्थातव्यं श्यामसामग्र्येत्यत्र च कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावादित्यर्थः ।

वह्निजननेति । तथा च वह्निसामग्र्या उपाधित्वे वह्निरेवोपाधिरुक्तः स्यात् । सामग्र्यास्तावत्कारणात्मकत्वात् । वह्नेरपि च कारणत्वादित्यर्थः । यद्यपि वह्निद्व्यणुकं न वह्निजन्यं वह्नित्वस्य परमाणावृत्त्यावयविमात्रवृत्तित्वात् । तथापि यदा प्रत्यक्षवह्निसामग्र्युपाधिरुच्यते तदा वह्निरेवोपाधिः स्यात् । साध्यं च नोपाधिः । व्यभिचारिसाधने साध्यवैशिष्ट्यप्रसङ्गादनुमानमात्रोच्छेदप्रसङ्गाच्चेति भावः । ननु वह्निरनुष्णः कृतकत्वादित्यत्र बाधोन्नीतपक्षेतरत्ववत् पर्वतेतरत्वमुपाधिः स्यादित्यत आह—न चेति । तत्र वह्नावुपजीव्यप्रत्यक्षेण साध्याभावप्रमया साधनस्य साध्यव्यभिचारनिश्चयाद्व्यभिचारे चावश्यमुपाधिसद्भावादन्यस्य

चोपाधेरभावात् पक्षेतरत्वमुपाधिः । प्रकृते च न तथा । अनुमान-मात्रोच्छेदादित्यर्थः । यद्यपि सर्वत्र बाधे नोपाधिः, धूमेन जल-ह्रदेऽग्निसाधने तदभावात् । तथापि साधनवति पक्षाभिमते बाधे सत्युपाधिरस्त्येव ।

अत एवेति । यद्यपि बाधितत्वज्ञानाभावस्यानुमितिप्रयो-जकतया विरोधिप्रमाणाभावनिश्चयोऽप्रयोजकस्तथापि विरोधि-प्रमाणसंशयस्यानुमितिप्रतिबन्धकतया तदभावनिश्चयोऽपेक्षणीय इति भावः ।

नन्वेतावता प्रत्यक्षोपाध्यभावनिश्चयेऽप्यतीन्द्रियतदभावः कथं निश्चेयः, कथं वा साध्यव्यापकोऽयं साधनव्यापको न वेति संशयस्य देशान्तरकालान्तरयोर्व्यभिचारसंशयस्य च निवृत्ति-रित्यत आह—तर्कश्चेति । यथा च तर्कस्य शङ्कानिवारकत्वं तथोक्तमधस्तात् ।

साधनाव्यापकत्व इति । नन्वेतत् साधनावच्छिन्नपक्षधर्मा-वच्छिन्नसाध्यव्यापकोपाध्योरव्यापकम् । न च तयोरनुपाधि-त्वम् । दूषकताबीजसाम्यात् । बाधानुन्नीतपक्षेतरत्वेऽतिव्या-प्तेश्च । न च यत्र पक्षे साध्यं नास्ति तत्र बाधोन्नीतः पक्षेतर-त्वमुपाधिरिष्यत एव । यत्र च पक्षे तदस्ति तत्र साध्याव्याप-कत्वान्न तस्योपाधित्वमिति युक्तम् । पक्षातिरिक्तसाध्यव्यापक-त्वनिश्चयेनैवोपाधित्वात् तस्य च तत्र सत्त्वात् । अन्यथोपाधि-मात्रोच्छेदापत्तेः ।

अथोपाधेः स्वव्यतिरेकेण सत्प्रतिपक्षीभूय दूषकत्वात् पक्षे-

तरत्वव्यतिरेकस्य चातन्त्रत्वात् । केवलान्वयिनि साध्यात्यन्ता-भावाप्रसिद्धेः केवलव्यतिरेकिणि विरुद्धत्वात् । अन्वयव्यतिरेकिणि चासाधारणत्वात् ।

मैवम् । तथा सति सत्प्रतिपक्षे तदनुद्भावनापत्तेः । एकेनैव भूयसामपि प्रतिबन्धात् । संदिग्धोपाधेरदूषकतापत्तेश्च । पक्षे तदभावस्य संदिग्धत्वात् । बाधोन्नीतस्यापि तस्यानुपाधितापत्तेश्च । अथोपाधिलक्षणे विपक्षाव्यावर्तकविशेषणशून्यत्वं विशेषणं पक्षेतरे च विशेषणस्य पक्षमात्रे व्यावर्तकतया विपक्षाव्यावर्तकत्वात् आर्द्रेन्धन-वत्त्वादेश्च विशेषणस्य विपक्षतप्तायःपिण्डादिव्यावर्तकत्वात् । एतच्च विशिष्टव्यतिरेकेऽप्यस्ति । बाधोन्नीते च नाव्याप्तिः । तस्य पक्षा-भिमतस्यापि विपक्षत्वादित्युच्यते । तत्किं व्यभिचारावारकविशे-षणवत्तया दूषकत्वमेवास्य नास्ति । ओमिति चेत् । न साध्य-व्यापकसाधनाव्यापकत्वमात्रस्यैव तद्बीजत्वात् । न च व्यभिचारा-वारकविशेषणशून्य एव व्याप्तिग्रहः । न हि वस्तु व्यभिचारावा-रकविशेषणशून्यं भवति । प्रमेयत्वादेः सर्वत्र सत्त्वात् । नापि तत्रो-पात्तविशेषणशून्यत्वं विवक्षितम् । न हि तत्रोपात्तं तेन शून्यं चेति संभवति । तस्मात्साध्यव्यापकत्वं साधनाव्यापकत्वं पक्षेतरत्वेऽप्य-स्तीति तदभावात् साध्याभावः स्यादेवेति हेतोर्व्यभिचार एव । व्यभिचारे चावश्यमुपाधिरिति पक्षेतरत्वमेवोपाधिः स्यात् । अत एवासाधकमिदं सोपाधित्वादित्यत्रापि पक्षेतरत्वोपाधेः संभवादन-मानमात्रोच्छेदकतया न तदुपाधिरित्यपास्तम् । साध्यव्यापकतया तद्व्यतिरेकस्य दूषणसंबन्धत्वेन जातित्वाभावात् । नापि पक्षधर्मा-

वच्छिन्नसाध्यव्यापकत्वे साधनाव्यापक उपाधिरार्द्रेन्धनप्रभववह्नि-मत्त्वादेः केवलसाध्यव्यापकस्योपाधेरसंग्रहात्। को हि पक्ष-वृत्तिधर्मस्तदवच्छेदकः। शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावण-त्वस्योपाधित्वप्रसङ्गाच्च। भवति हि शब्दत्वादिजातौ साध्याव्याप-कमपि शब्दवृत्तिगुणत्वावच्छिन्नाभिधेयत्वस्याश्रावणत्वं व्यापकम्। एतेन साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमि-त्यपास्तम्। आर्द्रेन्धनप्रभवत्वादेरुपाधेरव्यापनात्। जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वावच्छिन्नप्रमेयत्वव्यापकस्य पृथिवीत्वस्यो-पाधित्वापाताच्च। नापि पक्षावृत्तित्वे सति साध्यव्यापकत्वम्। अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वस्यानु-पाधित्वापत्तेः। पक्षवृत्तित्वात्। नापि साध्यसाधनसंबन्धव्यापक-त्वे सति साधनाव्यापकत्वमुपाधित्वम्। उपाधिना साध्यव्यभि-चारानुमाने साध्यव्यापकव्यभिचारित्वस्यैव गमकत्वे व्यर्थविशे-षणत्वात्। नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपा-धित्वम्। विषमव्याप्तस्यानुपाधितापत्तेः। व्यभिचारोन्नायकत्वस्य दूषकताबीजस्य तत्रापि सत्त्वात्। इदं साधनमेतत्साध्यात्यन्ताभाव-वद्वृत्ति एतत्साध्यव्यापकाव्याप्यत्वादिति प्रयोक्तुं शक्यत्वादिति।

उच्यते। पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक-त्वमुपाधित्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्य-वसितं साध्यम्। तत्रार्द्रेन्धनवह्न्याद्युपाधौ महानसत्वाद्येव तादृशो धर्मः। तदवच्छेदेन साध्यस्य धूमस्य प्रसिद्धेः। पक्षधर्मावच्छिन्न-साध्यव्यापकोपाधौ द्रव्यत्वं, साधनावच्छिन्नसाध्यव्यापकोपाधौ

साधनमेव तथा । तथा च तदवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साधनस्य साध्यव्यभिचारः स्यादेव । व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारित्वानियमात् । न च पक्षधर्मावच्छिन्नसाधनावच्छिन्नोपाधिव्यभिचारेण साधनस्य साध्यव्यभिचारोन्नयनेऽर्थान्तरम् । विशेषणाव्यभिचारित्वेन निश्चिते साधने विशिष्टव्यभिचारस्य सिध्यतो विशेष्यमाध्यव्यभिचारमादाय सिद्धेः । पक्षधर्मताबलात् । अन्यथा प्रतीतेरपर्यवसानात् । न च पक्षधर्मताबललभ्यसाध्यसिद्धावर्थान्तरत्वम् । अतिप्रसङ्गात् । नापि स्वव्याघातकत्वेनानुपाधौ पक्षेतरत्वेऽतिव्याप्तिः । अनुकूलतर्काभावेन तस्य साध्यव्यापकत्वानिश्चयात् । बाधोन्नीते च पक्षेतरत्वे साध्यव्यापकताग्राहकस्यानुकूलतर्कस्य सत्त्वात् । उपाधिश्च न स्वव्यतिरेकद्वारा सत्प्रतिपक्षतया दूषकः । संदिग्धोपाधेरदूषकतापत्तेः । नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया । साध्यव्याप्यसाधनाभिमताव्यापकत्वेनोपाधेरेव साध्यव्यापकत्वसाधनात् । नापि व्यभिचारोन्नायकत्वेन । साध्यव्याप्यव्यभिचारित्वेनोपाधेरेव साध्यव्यभिचारानुमानात् । तस्माद्विपक्षबाधकेन यावन्नोपाधेः साध्यव्यापकत्वं निश्चीयते तावदुपाधित्वाभावेन दूषणतैवास्य नास्तीति न दूषकताबीजचिन्ता । तन्निश्चये च साधनाभिमतस्य साध्यव्यापकत्वानिश्चयान्न तद्व्यभिचारित्वेन तदव्यापकत्वेनोपाधेः साध्यव्यभिचारित्वं साध्याव्यापकत्वं वानुमीयत इति संक्षेपः ।

दर्शनादर्शनेति । बाह्यस्य व्याप्तिरूपस्य ग्रहणे सहकारि

बाह्यसहकारि दर्शनादर्शनरूपं बाह्यसहकारिरूपं यस्य मनसस्तत्त-थोक्तम् । दर्शनादर्शनयोरसाधारणतया मनःसहकारित्वं साधा-रणतया वा ? आद्ये । **असाधारणनिमित्तेति** । द्वितीये । **किञ्चेति** । **तस्मादिति** । ननु यत्र बहिरिन्द्रियोपरमे भूयोदर्श-नजसंस्कारात् कारणान्तरेण व्याप्तिग्रहः तत्र बहिरिन्द्रिय-जन्यः सः । तस्मान्मनःसहकारी संस्कारः । न चैवं शब्दादे-रिव संस्कारस्य मानान्तरत्वापत्तिः । तर्कावतारे तस्य प्रयो-जकत्वात्तस्य चाप्रमात्वादतो निद्रादिवदप्रमाजनकत्वान्न माना-न्तरत्वम् ।

ननु सर्वेषामेव सविकल्पकानां संज्ञास्मरणान्तरकालीनत्व-नियमः । तटस्थस्यैव वाचकस्य वाच्यत्वोपलक्षकत्वात् । तच्च शब्दस्मरणं निर्विकल्पकेन कर्तव्यमिति व्याप्तावपि निर्विकल्पका-पत्तिरित्यत आह—**संज्ञास्मरणस्येति** । **क्वचिदिति** । यथा यत्र सादृश्येन रूपेण सादृश्यं न ज्ञायते तत्र सादृश्ये निर्विकल्पकमेवं यत्र व्याप्तित्वेन रूपेण व्याप्तिज्ञानं तत्र व्याप्तौ न निर्विकल्पकम् । यत्र तु व्याप्तित्वेन ज्ञानं तत्र सविकल्पकवेद्यत्वमेव । व्याप्तित्वस्य केवलसविकल्पकवेद्यत्वात् ।

**विस्फूर्जन्तामिति** । यद्यपि हि विस्फुरणं नकुलकार्य-मिति न विरोध्युदाहरणम् । तथाप्यहिनकुलयोर्विरोधेन तथात्वम् । पञ्चम्या हेतुत्वपरतानिराकरणाय व्याचष्टे—**कथमेतदिति** । **न चैवं सतीति** । एनेन संबन्धिनामतिप्रसक्तिं निवारयति न तु संबन्धानामित्यर्थः । **तस्यैवेति** । संबन्धमात्रस्येत्यर्थः । **एतस्येति** ।

कार्यास्त्वभिधानस्येत्यर्थः । ननु कथमों श्रावयन्नध्वर्युर्होतुर्लिङ्गम् । होतारं विनाप्यध्वर्योरोंशब्दकर्तृकत्वादित्यत आह—**होतुरित्यनेनेति** । तेन होतृसन्निहितायां यागभूमावों श्रावयन्नध्वर्युर्होतृलिङ्गमिति वाक्यार्थ इत्यर्थः । ननु लिङ्गविशेषणत्वेन होतुः प्रागेव ज्ञानात् किमनुमेयमित्यत आह । **प्रयोगास्त्विति** । तेनाध्वर्योर्होतृसबन्धे साध्ये न सिद्धसाधनम् । होतुः सन्निहितयागभूमावित्यन्वयः ।

**तदनन्तरभावित्वेति** । अभ्युपगमवादोऽयम् । वस्तुतश्चन्द्रोदयसमुद्रवृद्ध्योः समयभावित्वमेव । **पूर्वरूपनिवृत्ताविति** । यद्यपि जलपरमाणौ रूपं नित्यमेव जलावयविनि कारणगुणप्रक्रमेणैवोत्पद्यते । तथापि पूर्वरूपनिवृत्ताविति पूर्वरूपवतः पार्थिवस्य निवृत्तौ रूपादीत्यतद्गुणसंविज्ञानबहुव्रीहिणा स्वच्छतां लक्षयति । सा चौपाधिकसंसर्गाभाव एव ।

**सर्वमेवानुमानमिति** । अनुमानमत्र लिङ्गं न तु फलम् । तस्य सर्वत्रादृष्टत्वात् । **सर्वमेवेति** । सामान्येन रूपेण व्याप्तिग्रहविषयतया सर्वमेवानुमानं सामान्यतो दृष्टं भवतीत्यर्थः ।

**समानतन्त्रेति** । तत्रोक्तस्य पारिभाषिकरूपान्तरस्यानाभिधानादित्यर्थः । **नञर्थेति** । तत्र सामान्यतो दृष्टपदस्य नञर्थान्तर्भावेन व्याख्यातत्वादित्यर्थः । **एकस्य हीति** । एकस्य पक्षस्य । व्याप्त्या व्याप्तिज्ञानेन । सामान्यलक्षणप्रत्यासत्त्या सामान्येन पक्षविषयकमपि साध्यज्ञानं वृत्तमित्यर्थः । **यथा गव्येवेति** । आद्यदर्शनादौ गोत्वमनुपलभ्यापि सास्नोपलब्धा । भूयोदर्शनादौ

तु गोत्वसास्नात्वयोर्व्याप्तिमुपलभ्य पूर्वदृष्टे गवि गोत्वानुमितिर्भव-तीत्यर्थः । पक्षसपक्षयोर्जात्यभेदमभिधाय पक्षसपक्षवृत्तिसाध्ययो-स्तदाह—**अथवेति** । येनैव साध्येन सह व्याप्तिर्गृह्यते तस्यैव यदनुमानं तद्दृष्टम् । यच्च सामान्यतो गृहीतव्याप्त्या तज्जातीयधर्मा-न्तरसाधकं तत् सामान्यतो दृष्टमिति संक्षेपः ।

**पूर्वं हीति** । गोव्यक्तौ गोत्वजातिवैशिष्ट्यमनुमितामिति पक्षसपक्षात्मकजातीयौ । **संप्रत्यपीति** । ( सास्नादिमत्त्वे ? ) गोव्यक्तिसंबन्धस्य साध्यत्वे भवति । साध्यस्यैकजात्यमित्यर्थः । **पूर्ववदिति** । प्रसिद्धं यत्पूर्वं लिङ्गेन सह दृष्टं साध्यं फलवत्त्व-रूपं यच्च संप्रति फलानुमानं तयोरत्यन्तं जातिभेद इत्यर्थः । न तु पक्षसपक्षयोरत्यन्तं जातिभेदः । प्रयत्नत्वेनैकजात्यात् । फले च स्वर्गापवर्गादावैकजात्यभाव एव । अत एवाग्रे साध्यमात्र-साजात्यं वक्ष्यति ।

**अत्र सस्यादिकमित्यादि** । ननु हेयत्वोपादेयत्वमन्तरेण ज्ञानत्वमेव न संभवतीत्याह—**उपेक्षेति** । ननु स्वनिश्चितमात्मनि निश्चितं घटादिकं तदर्थं नानुमानं तस्य ज्ञानार्थत्वादित्यत आह—**भावे क्त इति** ।

नन्वनुमाने प्रमाणे शब्दान्तर्भावस्तदा संभाव्येत यदि शब्दः प्रमाणं स्यान्न तु तत्सिद्धमिति कुतस्तस्यानुमानान्तर्भावचिन्तेत्यत आह—**इह खल्विति** । न च शब्दः प्रमाणं न वेति न वा कोटेरप्रसिद्धिः । परामृष्यमाणलिङ्गकरणतावादिमते चरमध्वंसे प्रमा-करणत्वाभावप्रसिद्धेः । **भेदत इति** । शब्दोऽनुमानभिन्नो न वेत्यर्थः ।

लक्षणत इति । शब्दः प्रत्यक्षानुमानवृत्तिधर्मवान्न वेत्यर्थः ।

**तत्प्रामाण्यमिति** । वादिना शब्दाप्रामाण्यसाधनाय यत्प्रमाणशब्देनोपस्थाप्यं कुतस्ततः शब्दाप्रामाण्यं सिध्येदित्यर्थः । ननु शब्दाप्रामाण्येऽपि शब्दोपस्थापितैरगृहीतैः शब्दाप्रामाण्यबोधकमनुमानमुपस्थाप्यते न तु शब्देन तत साध्यते । वादिनोऽनाप्तत्वात ।

अत्राहुः । वादिवाक्यं स्वसमानविषयकप्रमाणोत्थापनद्वारा शब्दाप्रामाण्यं बोधयति न वा ? न चेदतिप्रसङ्गः । आद्ये । शब्दाप्रामाण्ये प्रमाणान्तरस्यापि न तत्समानविषयकत्वेन प्रामाण्यसिद्धिरिति कुतस्तादिष्टसिद्धिरिति भावः । ननु पुञ्जात्पुञ्जोत्पत्तिरिति न्यायेन चक्षुरपि रूपकार्यं, तथा च तदुत्पत्तिलक्षणस्तत्रास्तीत्यत आह—**न च चक्षुरपीति** । ननु चक्षुः कथं रसादिकार्यमित्यत आह—**रूपरसादीति** । तव दर्शने तेनैव न्यायेन रूपरसादिपुञ्जजन्यत्वं चक्षुष इति रसादिजन्यताप्यस्तीति रसादीनपि गमयेदित्यर्थः । यदि चाविनाभावाच्चक्षू रूपं गमयति तदा यत्राविनाभावस्य प्रयोजकत्वं तत्र ज्ञायमानस्यैवेति न चक्षुर्ज्ञाने तदविनाभावज्ञानमिति कथमज्ञायमानाच्चक्षुषो रूपज्ञानमित्याह—**अविनेति** । **ज्ञानसमसमय इति** । ज्ञानोत्पत्तिकालोत्पत्तिक इत्यर्थः । **अनन्तरेति** । अव्यवहितप्राक्कालीनो वेत्यर्थः । प्रत्यक्षज्ञानस्य संबद्धवर्तमानमात्रविषयकत्वनियमात क्षणभङ्गनयेन च पूर्वोत्तरक्षणोत्पत्तिकयोरभावनियमादतितुच्छत्वेनायं पक्षः पृथङ् न दूषितः ।

**आद्य इति** । तुल्यकालोत्पत्तिकयोः कार्यकारणभावादि-

त्यर्थः । संबन्धमात्राभावादिति पक्षमुपसंहरन्नेव निराकरोति—**तस्मादिति** ।

ननु वैशेषिकाणामविनाभावबलेन शब्दोऽर्थं बोधयतीति चक्षुरादिवत् स्वभावसंबन्धेन शब्दस्यार्थप्रतिपादकत्वस्वीकारेऽपसिद्धान्तः स्यात् ।

अत्राहुः । नायं शब्दार्थयोरविनाभावनिराकरणपरो ग्रन्थः । किन्तु ये शब्दस्यार्थप्रतिपादकत्वान्यथानुपपत्त्याविनाभावमाहुस्तन्मतमनेन निराक्रियते ।

शब्दार्थयोः संबन्धमाह—**तत्तत्सङ्केतेति** । **लक्षणं च तथेति** । व्यावर्तको धर्म इत्यर्थः । अप्रमाणशब्दस्य व्यावर्तनामाह—**सिद्धेति** । ननु पूर्वं न कस्याप्यनुमानेऽन्तर्भाव उक्तो यदपेक्षयापिशब्द इत्यत आह—**अपिशब्दश्चेति** । **साक्षादिति** । साक्षात्संबन्धः संयोगसमवायाभ्याम् । तदन्यत्वेन परम्परासंबन्ध इत्यर्थः । **अनैकान्तिकमिति** । गौरश्व इति समारितेनेत्यर्थः । **न ह्यत्रेति** । पदपदार्थयोर्न संयोगो न वा समवायः संबन्ध इत्यर्थः । **विशेषणेति** । विशेषणविशेष्यभावो हि परस्परमन्वयो न पदार्थयोरित्यर्थः । **न चेति** । लिङ्गस्य लिङ्गतया यज्ज्ञापकत्वं तदेव तस्य विषयो वाच्य इति नेत्यर्थः । परस्पराश्रयं विवृणोति—**तदुपलम्भे हीति** । प्रकारान्तरेण शब्दस्य लिङ्गत्वासिद्धौ ततोऽनुमितिसिद्धौ लिङ्गतया ज्ञापकत्वे व्याप्तिः सिध्येत् । अनेनैव रूपेण ज्ञापकत्वे लिङ्गत्वमित्यर्थः । ज्ञापकत्वमात्रे क्वात्र प्रसिद्धिः । प्रमापकत्वे व्यभिचार इति भावः । **तथापीति** । एते पदार्थाः । मिथः संसर्गवन्त इति

साध्यं प्रागुक्तमनुवर्तते । विशेषासिद्धिः संसृज्यमानः प्रत्येकपदार्थ इत्यस्य विशेषस्यासिद्धिरित्यर्थः। **संसर्गस्येति** । पदार्थविशिष्टस्यैव संसर्गस्य ज्ञानविषयत्वादित्यर्थः । ननु मिथः संसर्गसिद्धावप्येकज्ञानविषयत्वादिरेव संसर्गोऽस्तु । यद्वा । गवा दण्डमभ्याजेत्येवान्वयोऽस्तु । न। वक्तृतात्पर्यविषयत्वेन संसर्गस्य विशेषणात् । योग्यतया लिङ्गविशेषणान्नानापुंवक्तृकपदस्मारिते व्यभिचार इति भावः ।

**यद्वैतानीति** । ज्ञानविशेषणत्वेनात्रापि पदार्थसंसर्गसिद्धिः । भ्रान्तप्रतारकवाक्येन न व्यभिचारः । तस्याप्याहार्यसंसर्गज्ञानोपगमात् । तथापि शुकोदीरिते संवादिवाक्ये व्यभिचारः । तत्रापीश्वरस्यैव वेद इव संसर्गज्ञानात् । न चैवं भ्रान्तभ्रान्तिज्ञसंकरापात्तिः । भ्रान्तिज्ञज्ञानस्य भ्रान्तिविषयविषयकत्वेन व्यधिकरणप्रकारकत्वाभावात् । व्यधिकरणप्रकारकत्वस्य भ्रमज्ञानस्य भ्रमे सत्त्वात् ।

**संसृष्टा एवेति** । यद्यपि संसृष्टा इति साध्यं न तु नियमोऽपि । तथापि संभावनासाध्यत्वव्यवच्छेदपरमेतत् । **तदुक्तेरपीति** । अविप्रलम्भकेन भ्रान्तेन यदुक्तं पदजातं तदर्थानां संसर्गाभावादित्यर्थः । **प्रागेवेति** । योग्यतयैव हेतुविशेषणेनेत्यर्थः । **न तावदिति** । विशेषणविशेष्यभावस्य संसर्गरूपतया प्रागसिद्धेरित्यर्थः । **नापि यद्योग्यतेति** । योग्यतयैव गतार्थत्वादित्यर्थः । **नाप्याविनेति** । नीलं घटमानयेत्यादौ तदभावादित्यर्थः । **नापि विशेषेति** । नीलेन विशेषेण व्याप्येन सामान्यगुणमात्रं व्यापकमाक्षिप्तं तथा सरोजेन तथैव द्रव्यमात्रं तदनयोरविनाभावोऽस्त्येवेत्यर्थः । एतच्च न । घटो भवतीत्यत्र

घटेन गुणिसामान्यस्याक्षिप्तस्याविनाभावेन साकाङ्क्षतया पर्यवसानप्रसङ्गात् । **नापि प्रतिपत्तुरिति** । घटो भवतीत्यत्र प्रतिपत्तुर्गुणादिजिज्ञासायां पर्यवसानप्रसङ्गादित्यर्थः । **किं तर्हीति** । घटो भवतीत्यत्र तु गुणादिजिज्ञासा न पदस्मारितविशिष्टविषयेति न साकाङ्क्षत्वमित्यर्थः । **सत्तामात्रेणेति** । तथा चाकाङ्क्षायां सत्यामेव शब्दस्य ज्ञानजनने संभृतसामग्रीकत्वाद्धेतुरेव विलम्बित इति भावः । तर्हि माभूदाकाङ्क्षा लिङ्गविशेषणमित्यत आह— **आसत्तियोग्यतेति** । **व्यभिचारादिति** । राजपदार्थपुरुषपदार्थयोः परस्परमन्वये वक्तृज्ञानाभावादित्यर्थः । **न त्वेतदस्तीति** । यद्यपि प्रतिपदार्थमुत्थिताकाङ्क्षा तत एव विनष्टा कथं कालान्तरे स्वरूपसती वाक्यार्थप्रत्ययजननी । तज्ज्ञानकारणत्वे तु ज्ञानस्यापि पूर्वं नाशे संस्कारादुपयोगस्तस्याः संभवति । तथापि समूहविषयैकैव जिज्ञासा स्वरूपसती वाक्यार्थबुद्धौ हेतुः संभवति । भवतु वाकाङ्क्षा ज्ञातैव कारणम् । तथापि तद्विशिष्टो हेतुरनैकान्तिक इत्याह—**न वाकाङ्क्षायामिति** । **सा च स्मारितेति** । क्वचिद्वह्निरस्तु इत्यादौ शब्दस्मारितयोरेवाविनाभावः । क्वचित्तदाक्षिप्तयोर्नीलं सरोजमित्यादौ । एतावतैव कृते अहो विमलं जलं नद्यास्तीरे महिषश्चरतीत्यादावाकाङ्क्षासत्त्वादेव वाक्यता स्यादित्यत आह—**श्रोतरि तदुत्पाद्येति** । तेन वक्त्रानुत्पादितः स्मारितः इत्यादि तु प्रायिकत्वादुक्तम् । श्रोतृनिष्ठवक्तृविवक्षितसंसर्गावगमप्रागभाव इत्यर्थः । **प्रतियोगीति** । अयं प्रागभावो यदि ज्ञात उपयुज्यते तदा प्रतियोगिन्यवगमे ज्ञाते

ज्ञातव्यः। स च स्वविषयसंसर्गे ज्ञाते निरूप्य इति संसर्गस्य पूर्वमेव ज्ञानाद्वाक्यमनुवादकं स्यादित्यर्थः। **नियम एवेति**। यद्यपि नियमस्य न साध्यता। न हि वाक्यान्नियमः प्रतीयते। तथापि संभावनासाध्यतानिराकरणपरमिदम्।

**शब्दमात्रादिति**। आप्तोक्तानाप्तोक्तसाधारणादित्यर्थः। **विवक्षितार्थेति**। वक्तृतात्पर्यविषयवाक्यार्थप्रतीतिरित्यर्थः। **ननु तत्रापीति**। योग्यतादिज्ञानमात्रस्य प्रमाऽप्रमासाधारणस्य शाब्दज्ञानमात्रकारणत्वादित्यर्थः। **प्रवृत्तिसंकल्प इति**। प्रवृत्तिजनकः संकल्प इच्छा। **तदानीमिति**। आप्तोक्तत्वानिश्चयदशायामित्यर्थः। **न हीति**। व्याप्तत्वेनाप्रतिसंहृतामित्यर्थः। **अबाधितविषयत्वेति**। यद्यपि बाधाभावः स्वरूपसन्नेव प्रयोजको न तु ज्ञातस्तथापि बाधस्य हेत्वाभासतया ज्ञातस्यानुमितिप्रतिबन्धकत्वान्न ह्यज्ञाने यन्न भवति तत्तदभावज्ञानसाध्यं यथोपाध्यभावज्ञानाधीनानुमितिरिति। **व्याप्तेरिति**। बाधाभावज्ञानमनुमितिहेतुः। **प्रामाण्येति**। विशेषदर्शने सति शङ्काया अनुदयादित्यर्थः। **शब्दमात्रमिति**। संकेतज्ञानानपेक्षमित्यर्थः। **शब्दापशब्देति**। अर्थप्रतिपादकत्वस्यार्थस्मारकत्वस्यापशब्देऽपभ्रंशेऽपि सत्त्वादित्यर्थः। **किन्तु यः शब्द इति**।

नन्वेतावता पदार्थमात्रे आप्तत्वमायाति न तु वाक्यार्थे। पदार्थमात्रे चाप्तत्वमनाप्तवाक्येऽप्यस्ति। अत्राहुः। तत्रापि सुग्रहमेवाप्तत्वम्। तथा हि। वेदे तावदीश्वरस्य धर्मिग्राहकमानेनैव दोषाभावः सुग्रहः। लोकेऽपि भ्रमाभावोऽत्यन्ताभ्यस्तकाननानां काननविभाग-

परवाक्यत्वात्सुग्रहः । विप्रलिप्साद्यभावोऽपि प्रकरणादिना ज्ञायते । अन्यथाप्तत्वज्ञानं विना लक्षणा न स्यात् । अप्रमाणत्वेनाप्युपपत्तेः । अथ शाब्दप्रतीतौ यद्याप्तत्वं ज्ञातं प्रयोजकं स्यात्तदा तेन लिङ्गं विशेष्येत । न त्वेवम् । आप्तत्वानाप्तत्वसंशयेऽपि वाक्यार्थज्ञानदर्शनात् । अन्यथा वेदादपौरुषेयत्वाभिमानिनां वाक्यार्थप्रत्ययो न स्यादिति चेत् । न । अनाप्तोक्तत्वनिश्चये वाक्यार्थप्रतीत्यनुदयात् । यद्व्यतिरेकनिश्चयश्च शाब्दज्ञानप्रतिबन्धकस्तन्निश्चयः शाब्दज्ञानजनकः । यथा योग्यतादौ । तथा चाप्तोक्तत्वज्ञानमवश्यं शाब्दज्ञानप्रयोजकम् । न च दृष्टान्तासिद्धिः । शाब्दाभासोच्छेदापत्तेः ।

**अन्यथा त्विति** । यद्यप्याप्तोक्तमशक्यनिश्चयमेवेत्यर्थः । **दुष्परिहरमिति** । आप्तोक्तत्वनिश्चये वाक्यार्थप्रत्ययः वाक्यार्थप्रत्यये च तत्राप्तत्वं निश्चेयमित्यर्थः । **स्वशिरसीति** । अन्योन्याश्रयस्य दुष्परिहरत्वादित्यर्थः । **उभयोरिति** । शब्दस्यानुमानान्तर्भावानन्तर्भाववादिनोरित्यर्थः । **क्वचिदिति** । योग्यतादिशून्य इत्यर्थः । **न चायमपीति** । येनाकाङ्क्षया हेतुर्न विशेषणीय इति शेषः । **तथा सतीति** । ननु योग्यतादिमच्छब्दज्ञाने भवत्येव सर्वत्र वाक्यार्थप्रत्ययः । उच्यते । यद्याकाङ्क्षा स्वरूपसती वाक्यार्थज्ञाने हेतुस्तदाकाङ्क्षाभ्रमादनाकाङ्क्षेऽन्वयबोधो न स्यात् । किञ्चाकाङ्क्षासंशयविपर्ययोरन्वयबोधाभावात्तन्निश्चयस्तद्धेतुः । नन्वाकाङ्क्षासंसर्गावगमप्रागभावः प्रतियोगिज्ञाननिरूप्यः ज्ञानं च संसर्गनिरूप्यमिति ज्ञाताया आकाङ्क्षायाः प्रयोजकत्वे प्रागेव संसर्गनिरूपणं स्यादित्यत आह—**स्मारितेति** । तेन स्मारितसंसर्गा-

वगमप्रागभावस्तदाक्षिप्तसंसर्गावगमप्रागभावो वाकाङ्क्षा इति सामान्येनैव रूपेण तन्निरूपणमिति न प्रागेव संसर्गविशेषसिद्धिर्दोष इत्यर्थः । आकाङ्क्षायोग्यतासत्तीनां च निर्वचनमन्वीक्षातत्त्वबोधे तात्पर्यपरिशुद्धिप्रकाशे च सम्यङ्निरूपितमिति विस्तरभयान्नेह प्रतायते ॥

संदिग्धेति । वक्तुः संदेहादयमाप्तोक्तत्वसंदेहो द्रष्टव्यो न तु वक्तुराप्तत्वसंदेहः । धर्मिग्राहकमानेनैव तन्निश्चयात् । आप्तोक्ता वेदा इति । आप्तोक्तत्वं च वेदसमानविषयानित्यज्ञानातिरिक्तकारणीभूतयथार्थज्ञानसमानविषयत्वम् । ननु महाजनपरिगृहीतत्वादिति हेतुः साध्यसाधनयोरगृहीतव्याप्तिकतया नान्वयी न वा व्यतिरेकी प्रामाण्ये साध्येऽसाधारणः । मैवम् । अन्वयेन दृष्टान्तस्यायुर्वेदस्य सत्त्वात् । व्यतिरेकिण्यपि महाजनपरिगृहीतान्यलौकिकार्थानि वाक्यानि स्वार्थे प्रमाणानि एतादृग्वाक्यत्वादित्यत्रासाधारण्याभावात् । न चाप्रयोजकत्वम् । महाजनपरिगृहीतत्वस्यैव विपक्षबाधकत्वात् ।

स्वतन्त्रेति । आनुपूर्वीज्ञानजन्यानुपूर्वीज्ञानविषयत्वमेव स्वतन्त्रपुरुषप्रणीतत्वम् । सर्वदर्शनेति । अत्रान्वये व्याकरणवैद्यकादिर्दृष्टान्तः । ननु वैद्यके कर्मण्यनुष्ठीयमानेऽपि फलाभावादप्रामाण्यमपि स्यादित्यत आह—सिद्धे चेति । ननु नास्माकं महाजनपरिग्रहात् प्रामाण्यं, किन्तु नित्यत्वेनापौरुषेयत्वादित्यत आह—तदेवमिति । अन्यथापीति । नित्यत्वग्राहकं प्रत्यभिज्ञानं तज्जातीयत्वविषयत्वेनाप्युपपद्यत इत्यर्थः । ननु चास्मर्यमाणकर्तृकत्वाद्वेदानामपौरुषेयत्वं

साध्यमित्यत आह—अस्मर्यमाणेति । न हि वयमस्येति । ननु मौनिश्लोकवत् कण्ठाद्यभिघाताभावेऽपि वेदकर्तृत्वं भविष्यति ।

अत्राहुः । तथापि मौनी यथा लिप्यादिना परं श्लोकं बोधयति तथेश्वरोऽपि परं बोधयिष्यतीत्यायातमीश्वरस्य शरीरम् । न च मन्वादिभिः सर्गाद्यकालीनैरतीन्द्रियदर्शित्वेन स्वयमेव तज्ज्ञानम् । तेषामतीन्द्रियार्थदर्शित्वे मानाभावात् ।

यद्वा । शब्दकर्तावश्यं शरीरीति नियमः । आयतनतयेति । तेन भोक्तुर्भोगायतनं शरीरमिति लक्षणं शरीरविशेषस्येति द्रष्टव्यम् ।

ददातिशब्दो हीति । ननु संप्रदानमनभिधायापि रजकस्य वस्त्रं ददातीत्यादौ ददातिशब्दप्रयोगादिदमयुक्तम् । ददातिकर्मणा चाभिप्रेतो न वक्ता । ददातिशब्दाप्रयोगे संप्रदानाभावापत्तेः । नापि कर्ता । वक्तरि तदापत्तेः ।

मैवम् । वेदे ब्राह्मणाय गां दद्यादित्यादौ संप्रदानसमभिव्याहृतो ददातिशब्दः संप्रदानबुद्धिं विना न भवतीत्येवंपरत्वात् ।

तथा हीति । ननु प्रमेयाज्ञानत्वेन तद्धेत्वतिरिक्तहेतुजन्यतया साध्यबाधः, ज्ञानाजनकजन्यत्वे विरोधः, अप्रमायां तदसिद्धिश्च । किं च । यत्किञ्चिज्ज्ञानहेत्वपेक्षया सर्वतद्धेत्वपेक्षया वातिरिक्तत्वे इन्द्रियादिभिः सिद्धसाधनम् । न च ज्ञानत्वावच्छिन्नकार्यत्वान्यकार्यत्वप्रतियोगिककारणजन्येति साध्यम् । ज्ञानत्वस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वात् । अनित्यज्ञानत्वेतिकरणे इन्द्रियादिभिर्यथायथं सिद्धसाधनम् । तेषां प्रत्येकं ज्ञानमात्राहेतुत्वात् ।

एतेन प्रमात्वं ज्ञानत्वावच्छिन्नकार्यत्वनिरूपितकारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकं ज्ञानत्वं साक्षाद्व्याप्यधर्मत्वादप्रमात्ववदिति निरस्तम्। प्रमात्वस्य नित्यवृत्तित्वात्। अनित्यप्रमात्वं तथा कार्यमात्रवृत्तित्वादित्यपि नीलघटत्वादिना व्यभिचारि। अनित्यप्रमा प्रमाऽप्रमोभयहेतुभिन्नहेतुजन्या जन्यत्वादप्रमावदिति चेत्। न। दोषस्य पित्तादेः स्वविषयप्रमाहेतुत्वेनाप्रमायां तदसिद्धेः॥

उच्यते। यत्कार्यं यत्कार्यविजातीयं तत् तत्कारणविजातीयकारणजन्यं यथा घटविजातीयः पटः। अन्यथा कार्यवैचित्र्यस्याकस्मिकतापत्तेः। घटज्ञानजातीयमपि कार्यं तद्विजातीयकार्यकारणविजातीयघटेन्द्रियसन्निकर्षादिजन्यमिति। एवञ्च प्रमाऽप्रमाकारणविजातीयकारणजन्या अप्रमाविजातीयकार्यत्वात् घटवत्। किञ्चानित्यप्रमात्वं कार्यतावच्छेदकं, बाधकं विना कार्यमात्रवृत्तिधर्मत्वादप्रमात्ववत्। नीलघटत्वं तु विशिष्टं न कार्यतावच्छेदकम्। प्रत्येकमनुगतद्वयादेव विशिष्टबुद्धेरार्थः समाज इति भावः।

यदि त्विति। यावती प्रमासामग्री तावन्मात्रप्रयोज्या यद्यप्रमा स्यात् प्रमा स्यादित्यर्थः। असिद्धमात्रापादकमप्रमायाः प्रमित्यजनकदोषजन्यत्वादित्याह—ज्ञानत्वेऽपीति। एवं तर्हीति। तथाच ज्ञानसामग्रीमात्रजन्यत्वरूपं प्रामाण्यस्य न स्वतस्त्वमित्यर्थः। ननु चास्तु प्रमायां दोषाभावो हेतुः। तथाचागन्तुकभावानपेक्षज्ञानसामग्रीजन्यत्वमेव स्वतस्त्वं दोषाभावस्य तदनुविधानादित्याह—अस्तु दोषाभाव इति। विशेषादर्शनादेव भावस्यापि दोषत्वे

तदभावे विशेषदर्शनं भावस्तद्धेतुः स्यादिति नोक्तरूपं स्वतस्त्व-मित्याह—**भवेदप्येवमिति** । किञ्च । दोषाभावस्येव भूयोऽवयवे-न्द्रियसंनिकर्षविशेषदर्शनादिसमवधाने प्रमा, तदभावे त्वप्रमेति गुण-स्याप्यन्वयव्यतिरेकयोः सत्त्वाद्गुणोऽपि तद्धेतुरित्याह—**प्रामाण्यं प्रतीति** । अन्वयव्यतिरेकतुल्यत्वेन प्रमायां गुणोऽप्रमायां तदभावो हेतुरिति वैपरीत्यमेव किं न स्यादिति भावः । प्रमामात्रे च नानुगतो गुणः, किन्तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसंनिकर्ष-यथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां प्रत्येकमेव गुणत्वमन्वयव्यति-रेकात् । प्रत्यक्षविशेषदर्शनमपि गुणस्तदनुविधानात् । यद्यपि स्थाणुत्वव्याप्यवक्रकोटराद्यारोपविशेषगुणदर्शनेऽपि स्थाणुत्वभ्रमो भवत्येव । तथापि विशेषदर्शनं प्रमारूपं गुणो विवक्षितः ।

**एवं प्रामाण्यमिति** । प्रामाण्यस्य स्वतो ग्रहेऽनभ्यासदशो-त्पन्नज्ञाने तत्संशयो न स्यात् । ज्ञानग्रहे प्रामाण्यनिश्चयात् । अनि-श्चये वा न स्वतः प्रामाण्यग्रहः । ज्ञानाग्रहे च धर्मिज्ञानाभावान्न संशय इत्यर्थः । ननु स्वग्राह्यत्वेऽपि परग्राह्यत्वात् स्वस्याप्यन्यापेक्षया परत्वात्, भट्टमते परग्राह्यत्वाच्च सिद्धसाधनम् । न च ग्राह्यप्रामाण्या-पेक्षया परत्वं ग्राहकस्यापि । ग्राह्यप्रामाण्यत्वेन तदपेक्षया परत्वा-भावात् । अग्राह्यप्रामाण्यापेक्षयाऽप्रमाणत्वप्रसङ्गात् । अर्थेऽनैका-न्तिकश्च । उच्यते । अनभ्यासदशोत्पन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यं स्वाश्रयातिरिक्तग्राह्यं वा । आश्रये सत्यपि तदुत्तरतृतीयक्षणवर्त्ति-संशयाविषयत्वात् । अप्रामाण्यसंशयाजन्यसंशयविषयत्वाच्च । अप्रा-माण्यवत् । अर्थे निश्चितेऽपि न निश्चयानन्तरतृतीयक्षणेऽर्थ-

संशयो न वाऽप्रामाण्यसंशयं विनेति नार्थेन व्यभिचारः ।

ज्ञानत्वसंशयवदिति । यथा ज्ञानत्वे निश्चिते तत्र संशयो न भवति तथा प्रामाण्येऽपि निश्चित इत्यर्थः ।

अथ प्रामाण्यवदिति । प्रामाण्यज्ञानमात्रं न संशयविरोधकं किन्तु प्रामाण्यमेवेति साधारणं ज्ञानमिति शङ्कितुरभिप्रायः । तत्किमिति । प्रामाण्यस्य ज्ञानं प्रामाण्याश्रयो ज्ञानमित्यर्थः । प्रमाणज्ञानमिति पाठे प्रमाणरूपं ज्ञानमित्यर्थः । निश्चयमात्रमेव संशयप्रतिबन्धकं न तु तद्विशेष इत्याशयेन परिहारः । तदप्रतीतेरिति । प्रामाण्याप्रतीतेरित्यर्थः ।

झटितीति । लिङ्गज्ञानापेक्षायां विलम्बः स्यादित्यर्थः । प्रवृत्तौ न प्रामाण्यग्रहस्य सर्वत्रोपयोगः । तथात्वेऽपि झटित्यभ्यासापन्नलिङ्गानुसंधानादप्युपपत्तिरित्याह—अन्यथैवेति । ननु पक्षलिङ्गव्यापारज्ञानानां प्रामाण्यानवधारणे स्वाश्रयाद्यसिद्धिरवधारणे चानवस्था । न च लिङ्गादिज्ञानं स्वविषयनिश्चये कर्तव्ये स्वप्रामाण्यज्ञानं नापेक्षते, प्रामाण्यसंशये लिङ्गस्य संदिग्धत्वादित्यत आह—न चानवस्थेति । चरमप्रामाण्यज्ञानस्य ज्ञानाभावेन कोटिस्मरणभावेन विषयान्तरसंचारेण वा प्रामाण्यसंशयानवश्यम्भावादित्यर्थः । अन्यथा भट्टपक्षेऽपि प्रामाण्यस्य ज्ञानानुमितिग्राह्यत्वेऽनवस्था स्यादित्याह—तथात्वे चेति । प्राभाकरेऽपि मते प्रामाण्यस्य स्वग्राह्यत्वं न स्वग्राह्यम् । स्वरूपप्रामाण्यबहिर्भूतत्वात् । किन्तु परग्राह्यत्वेऽनवस्थानात् परिशेषानुमानेन मानान्तरेण वा ग्राह्यम् । तथाच तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनैवेत्यनवस्थेति भावः । प्रामाण्यानुमानं च

प्रथमं व्यतिरेकिणा । अयं पृथिवीत्वेनानुभवो न पृथिवीत्वाभाववति पृथिवीत्वप्रकारकः गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वात् यन्नैवं तन्नैवं यथा पृथिवीभ्रमः । तथाच पृथिवीभ्रमे पृथिवीत्वाभाववति पृथिवीत्वप्रकारकत्वगन्धवद्विशेष्यकपृथिवीत्वप्रकारकत्वाभावयोर्व्याप्तिग्रहादप्रामाण्यव्यापकहेत्वभावाभावरूपाद्धेतोरप्रामाण्याभावाभावरूपं प्रामाण्यं सिध्यति । यद्व्यापकतया हेत्वभावो गृहीतस्तदभावस्यैव हेतुना साध्यमानत्वात् । व्यतिरेक्यनन्तरं तज्जातीयत्वेनान्वयिना प्रामाण्यानुमानम् । यथेदं पृथिवीज्ञानं प्रमा गन्धवद्विशेष्यकपृथिवीज्ञानत्वात् । तत्त्वेन मतवत् । अधिकस्तु पल्लवोऽन्वीक्षातत्त्वबोधे प्रदर्शित इति नेह प्रतायते ॥

**समयबलेति** । अर्थविशेषे चेष्टाविशेषस्य संकेते गृह्यमाण एव ततोऽर्थप्रतीतिः । सङ्केतज्ञानपुरस्सरं प्रवृत्तप्रमाणस्यैव च शब्दत्वाच्चेष्टाया अपि तथात्वात्तत्रान्तर्भावश्चेष्टाया इत्यर्थः । एवं सति चेष्टायां शब्दव्यवहारमुपपादयति—शब्द एव त्विति । न ह्यत्रेति । पुमभिप्रायस्यानियतत्वादित्यर्थः । नापीति । ऐश्वरस्याधुनिकस्य वा नियतस्य संकेतस्याभावादित्यर्थः । अतः स्कृप्तप्रमाणवैधर्म्याच्चेष्टा मानान्तरमेवेति भावः । द्विविधेति । यद्यपि सर्वा चेष्टा कृतसमयैव । इयांस्तु विशेषः । स्वनियतोऽपि क्वचिद्देवदत्तादिपदवदाधुनिको यथा हट्टादौ तर्जनीस्पर्शे । क्वचिद्घटादिपदवदैश्वरः । पटादिपदवच्चेष्टाविशेषस्याप्यनादित्वाविशेषात् । यथाङ्गुलीपञ्चकबुद्धिभावे पञ्चेति । तथाप्याधुनिकसंकेतमाश्रित्य कृतसमयत्वाकृतसमयत्वव्यवहारः ।

**तत्र कृतसमयेति** । नन्वभिप्रायस्थः शब्दो न तावत् सम-

यग्राहकादन्यो वाच्यः, तस्य नियमेनोपस्थितौ मानाभावात् । नापि समयग्राहक एव शब्दः । स हि तदा स्याद्यदि चेष्टायां शब्दादेव परं समयग्रहः स्यात् । न चैवं चेष्टान्तरेणैव व्यवहारश्चेष्टायामपि समयग्रहात् ।

मैवम् । यत्र शब्देनार्थविशेषे चेष्टाविशेषस्य संकेतग्रहस्तदभिप्रेत्योक्तम् ।

**तत्रेति** । तत्र चेष्टातः शब्द एव स्मर्यते । स एव स्मृतः संसर्गबोधको न चेष्टेत्यर्थः । **लिपिवदिति** । यद्यपि लिपेः शब्दसङ्केतो नार्थेऽर्थविशेषमजानतोऽपि लेखकादेः शब्दस्वरूपज्ञानादिति वैषम्यम् । तथापि यथा वाक्यार्थसङ्केतितानां पदानां वाक्यार्थस्मारकत्वं तथा यत्र विशिष्टेऽर्थे चेष्टायाः सङ्केतो गृहीतस्तत्र विशिष्टार्थस्य ततः स्मृतिरेव नानुभव इति कुतः स्मृतिमात्रोपयोगिन्याश्चेष्टायाः प्रमाणत्वमित्यभिप्रेत्योक्तम्—**न चेति** । स्मृतिश्च न प्रमेति भावः ।

**यदि हीति** । यं जनयित्वैव यं प्रति यस्य नियतपूर्वभावस्तस्यैव तद्व्यापारत्वादिति भावः । **न चैवमिति** । चेष्टां विनाप्याकाङ्क्षादिमतः शब्दाद्व्युत्पन्नस्यार्थप्रत्ययाद्व्यभिचार इत्यर्थः । **नन्वेवमिति** । तथाच व्यभिचारान्न सर्वत्र चेष्टायाः शब्दोपजीवनमिति भावः । **अत एवेति** । शब्दव्युत्पत्त्यभावादित्यर्थः । तथाच त्वदीयं लक्षणं चेष्टासाधारणं न तत्रास्तीति चेष्टापि तत्र प्रमाणं न स्यात् । मानान्तरं च तत्र संकेतग्राहकं नास्त्येवेति भावः । **व्यवहारश्चेति** । न च शब्देऽप्येवमभिप्रायानुमानादेव

प्रवृत्तिरस्त्विति वाच्यम् । शब्दादिदं निश्चिनोमीत्यनुव्यवसायात्तस्यानुभवजनकत्वे स्थिते तदनुकूलकल्पनादिति भावः ।

अकृतेति । यत्र हट्टादावाधुनिक एव संकेतः क्रियत इत्यर्थः । **अविनाभावेति** । व्याप्तिं विना चान्येनान्यस्य स्मरणेऽतिप्रसङ्ग इत्यर्थः । तस्मात् क्वचिच्छब्दस्मृत्या क्वचिदभिप्रायानुमानेनान्यथासिद्धा न पदार्थस्मारिकेति न चेष्टा विशिष्टानुभवे प्रमाणमिति भावः । ननु यथा घटादिपदानां शक्तिग्रहे प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यस्य प्रवृत्तिदर्शनाद्वाक्यार्थज्ञाने वाक्यस्य कारणतां गृहीत्वा पश्चादावापोद्वापाभ्यां तत्तत्पदानां तत्तदर्थज्ञाने शक्तिर्गृह्यते तथा चेष्टासमूहस्य विशिष्टार्थज्ञाने हेतुत्वं ग्रहीष्यत इति चेष्टा प्रमाणं स्यादित्यत आह–**स्मारयतु वेति** । प्रकारभेदमाह–**कृत्यन्वयिनीति** । यस्यां सङ्केतयितुः कृतावभिप्रायः सा कृत्यन्वयिनी । यथा शङ्खध्वनौ यास्यसीति । यस्यां ज्ञाने तस्याभिप्रायः सा ज्ञप्त्यन्वयिनी । यथोर्ध्वतर्जनीकरणे दश संख्या ज्ञास्यसीति । **कारकेष्विति** । प्रातिपदिकार्थमात्रं स्मर्यते न त्वन्वयप्रकारः कर्मत्वाद्यपीत्यर्थः । **वर्तमानेति** । क्रियास्वरूपप्रधानेत्यर्थः । ननु चेष्टाया अभिप्रायमात्रद्योतनेऽन्वयप्रकारेषु कर्मत्वादिषु सुकरः सङ्केतः । न च पूर्वैरन्वयप्रकारेषु काचिच्चेष्टा सङ्केतितेति वाच्यम् । इदानीमपि तत्करणसंभवात् । कथं वाऽपभ्रंशेऽन्वयप्रकारोपस्थापकविभक्त्यभावेऽन्वयबोधः । मैवम् । गामानयेत्यत्रेव गौः कर्मानयनमित्यत्र वाक्यार्थप्रत्ययाभावादन्वयव्यतिरेकाभ्यां विभक्त्युपस्थापितकर्मत्वादेरेवान्वयबोधकत्वात् । अपभ्रंशे

तु विभक्तिसंकेतारोपादेव संसर्गबोध इति स्वतन्त्रपदार्थोपस्थितौ गौरश्व इति वन्नान्वयबोधः स्यादिति भावः।

प्रकरणाद्यस्त्विति। नानार्थादौ सामान्यशब्दस्य विशेषपरत्वमात्रं प्रकरणादितः स्यान्न तु कारकविशेषान्वयप्रकारोपास्थितिरपि। तथात्वे वा स्वतन्त्रपदार्थोपस्थितावपि प्रकरणादिनान्वयप्रकारोपस्थापकविभक्त्युन्नयनादन्वयबोधः स्यादित्यर्थः। कथं तर्हीति। व्यवहारस्य संसर्गज्ञानसाध्यत्वादित्यर्थः। स्वरूपत इति। असाधारणप्रमाकरणत्वेनेत्यर्थः। ननु सादृश्यमेवोपमानस्य विषयत्वेन परिच्छेद्यं भविष्यतीत्यत आह—तथाहीति। सामान्यं च यथायथं प्रत्यक्षादिपरिच्छेद्यमेवेति न तद्ग्रहे मानान्तरापेक्षेत्यर्थः।

यद्यपि सादृश्यं सप्रतियोगि न तु निष्प्रतियोगि सामान्यमेकं तथापि तद्भिन्नत्वे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यम्। तत्र च भेदः सप्रतियोगिक इति तद्घटितस्य सादृश्यस्यापि सप्रतियोगिकत्वम्।

यद्यपि चैकमेव सामान्यं न सादृश्यं भूयःसामान्यात्मकतयाङ्गीकारे च सादृश्यमनेकं स्यात्। तथापि तावत्सु भूयःसामान्येष्वेकत्वमौपाधिकम्। ननु गोसदृशो गवय इति प्रत्यक्षानन्तरमेतत्सदृशो गौरिति ज्ञानमुपमानफलं स्यात्, तस्येन्द्रियासंनिकृष्टविषयत्वेनाप्रत्यक्षत्वादेतत्सदृशत्वेन पूर्वमननुभूतविषयत्वेनास्मृतित्वादित्याह—न चैतदिति। एवं च सति तद्विधर्मेयं व्यक्तिरित्यवगते एतद्विधर्मा सा व्यक्तिरित्यपि ज्ञानमुपमानफलं स्यादुक्तयुक्तेरित्याह-तथा सतीति।

अथैतादिति । ननु नैयायिकानामर्थापत्तिरनुमानम् । न चात्र तत्सम्भवति । सा व्यक्तिरेतत्सदृशी एतन्निष्ठसादृश्यप्रतियोगित्वादित्यस्यागमकत्वात् । तत्प्रतियोगिकैतन्निष्ठसादृश्यग्रहे तद्विशेष्यकस्य तृतीयलिङ्गपरामर्शस्याभावात् । विशेष्यस्येन्द्रियासंनिकर्षात् । न च तत्प्रतियोगिकसादृश्ये गृहीते तस्यैव तत्प्रतियोगित्वे संशयाभावात् समानसंवित्संवेद्यत्वेनैतत्सादृश्यप्रतियोगित्वमपि भातमेवेति वाच्यम् । इन्द्रियसंनिकर्षाभावेन समानसंवित्संवेद्यत्वाभावात् ।

अत्राहुः । प्रत्यक्षज्ञानस्येन्द्रियार्थसंनिकर्षजत्वे नियमो न तु यावन्तोऽर्थास्तद्विषयास्तावन्तः सर्वेन्द्रियसंनिकृष्टाः । अयं स इति विपरीतप्रत्यभिज्ञायां व्यभिचारात् । न च विशेष्ये तथा नियम एवेति वाच्यम् । तथापि मनसैव परामर्शजननात् ।

अथ गवयशब्दः कस्यचिद्वाचकः शिष्टैः प्रयुज्यमानत्वादिति नागरकेण निश्चिते विशेषं जिज्ञासमानेन कीदृग्गवय इत्यारण्यके पृष्टे तेन च गोसदृशो गवय इत्युक्ते यदा नागरको वनं गतः पिण्डं तादृशमनुभवन् वाक्यार्थस्मरणसहकृतात् सादृश्यज्ञानादयं गवयशब्दवाच्य इति प्रमिणोति तदा संज्ञासंज्ञिसंबन्धपरिच्छेद उपमानफलमित्याह—संज्ञासंज्ञिसंबन्धेति । नैवं वाक्यादेव नागरकेण यो गोसदृशः स गवय इति प्रतीतेर्न तदुपमानफलमित्याह—वाक्यादेवेति । केवलमिति । य एवाप्तवाक्याद्गोसदृशो धर्मी गवयपदवाच्यतयावधृतस्तमिदानीं पश्यामीति प्रत्यभिज्ञानमात्रं दृष्टे गवये भवतीत्यर्थः । गवयपदे गवयत्वं प्रवृत्तिनिमित्तं तन्न पूर्वं प्रमितम् । प्रमितं च गोसादृश्यं तन्न प्रवृत्तिनिमित्तमतः प्रवृत्ति-

निमित्ताज्ञानान्न शब्दात्तत्फलमित्याह—भवेदेवमिति। तदुपपादयति—तथासतीति। गोरज्ञाने तन्निरूपितसादृश्याज्ञानादित्यर्थः। वस्तुतो गोसादृश्यापेक्षया गवयत्वस्य लघुत्वादिति भावः। स्वयं प्रतीतेति। यस्मिन् प्रवृत्तिनिमित्ते स्वयं व्युत्पन्नस्तत् परस्य बोधनीयम् आवश्यकश्च गवयत्व एव गवयपदप्रवृत्तिनिमित्ततया व्युत्पन्नस्ततस्तदेव तत्पदप्रवृत्तिनिमित्तं बोधयेदित्यर्थः। तथाप्यापातत इति। गोसादृश्यं वा प्रवृत्तिनिमित्तं तदुपलक्षितधर्मान्तरमिति संशये क्व प्रवृत्तिनिमित्तनिश्चय इत्यर्थः। अफलमिति। प्रवृत्तिनिमित्तविशेषानिश्चायकमित्यर्थः। फलिष्यतीति। प्रवृत्तिनिमित्तं बोधयिष्यतीत्यर्थः। तात्पर्यसंदेहादिति। यदापि सादृश्यस्यैव शब्दोपस्थितस्य प्रवृत्तिनिमित्तत्वानिश्चयस्तदापि न वाक्यपर्यवसानम्। तात्पर्यविषयाज्ञानात्। न हि भ्रान्त्यान्यादृशान्वयबोधे वाक्यं पर्यवस्यतीत्यर्थः। उपलक्ष्यगतायामिति। गवयत्वे प्रवृत्तिनिमित्ते तात्पर्यविधारणाल्लक्षणया शब्दस्तद्बोधक इत्यर्थः। यथाश्रुतपदार्थान्वयेनैव वाक्ये फलिते लक्षणा न कल्प्यते। यत्र तु गङ्गायां घोष इति वदन्वय एव मुख्यार्थे न संभवति तत्र तत्कल्पनम्। इह तु गोसादृश्यसमानाधिकरणं गवयपदवाच्यत्वमिति शब्दादवगतस्याग्रेऽपि न बाध इत्याह—नन्वेवमिति। विशेषसंदेहः प्रवृत्तिनिमित्तसंदेहः। अन्यथेति। यदि मानान्तरोपनीतरक्तत्वाद्यपेक्षं पटो भवतीति वाक्यं पर्यवसन्नं तदा पटभवनरक्तत्वयोर्विधेयत्वेऽर्थभेदाद्वाक्यभेदः स्यादित्यर्थः।

शाब्दं समानविभक्तिकतामात्रम्। आर्थं वक्तृतात्पर्यविषयी-

भूतार्थप्रतिपादकत्वम् । परस्परापेक्षामात्रेणेत्यत्रान्वयोपपत्तिरित्यनुषज्यते । तस्माद्वास्तवेति ।

ननु यत्र गोसादृश्यगवयपदवाच्यतयोः सामानाधिकरण्यमात्र एव तात्पर्यं न तु गवयत्वप्रवृत्तिनिमित्तकतायामपि तत्र शब्दस्य पर्यवसन्नत्वात् प्रमाणान्तरं गवयत्वप्रवृत्तिनिमित्तताग्राहकं वाच्यम् । अथ गौरवाख्यतर्केणेतराप्रवृत्तिनिमित्तकत्वेऽवधृतं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति व्यतिरेकी स्यात् । न । इतराप्रवृत्तिनिमित्तकत्वस्य केवलतर्कस्यानिश्चायकत्वेनासिद्धेः । तस्माद्यस्य तर्कः सहकारी तन्मानान्तरं वाच्यम् ।

अत्राहुः । सप्रवृत्तिनिमित्तकताग्राहकसामान्यतो दृष्टमेव गौरवाख्यतर्कसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वे गवयत्वप्रवृत्तिनिमित्तकतां परिच्छिनत्ति क्लृप्तमान एव तर्कस्य सहकारित्वे संभवति कल्पनीयप्रमाणे तथात्वस्यान्याय्यत्वाद्गौरवादिति ॥

दृढतरप्रमाणेति । योग्यानुपलम्भसहकृतेन्द्रियग्राह्यत्वेन गृहासत्त्वस्य निश्चितत्वमुक्तम् । एवं जीवनमपि ज्योतिःशास्त्रात्प्रमितमिति मरणं न कल्प्यते । अन्यथेति । बहिः सत्त्वं विना गृहासतो जीवित्वमनुपपद्यमानमर्थापत्तिफलमित्यर्थः । विरोध्येवेत्यनेन प्रकृतोपयुक्तं नोक्तमित्यत आह–विरोधीति । तथापीति । यद्यपि जीवनबहिःसत्त्वयोर्मिथो विरोधे तदुभयमेकत्र देवदत्ते न वर्तेत इति केन बहिःसत्त्वं साध्यम् । तथापि जीवता क्वापि स्थातव्यमिति यदि गृहाविषयकं स्यात्तदा विरोधः स्यादिति

तर्कितेन विरोधेनानयोर्विरोधित्वम् । अत एव यथाश्रुतापरितोषात्तात्पर्यार्थमाह—**इदमत्रेति** । **न तावदिति** । अनियम्यानियामकयोरव्याप्यव्यापकभूतयोर्न परस्परमुपपाद्योपपादकभावः । न ह्यव्याप्यमव्यापकं विनानुपपन्नम् अपि तु व्याप्यं व्यापकं विनानुपपन्नमित्यनुपपत्तौ व्याप्तिरस्त्येवेति तत्प्रतिसंधानात्कल्पनमनुमानमेवेत्यर्थः । **व्यतिरेकेति** । बहिःसत्त्वेन विना जीवतो गृहाभाव एव न भवतीति व्यतिरेकव्याप्तिरेवेत्यर्थः । **कृतमिति** । अर्थापत्तिरूपप्रमाणस्य कृतमनुमानादर्थान्तरत्वग्रहणेत्यर्थः । यथानुमानं व्याप्तिज्ञानाद्भवति, अन्यथानुपपत्तिस्तु कल्प्यकल्पकयोर्व्याप्तावपि तज्ज्ञानं विनैव प्रवर्तत इति नेयमनुमानमित्याशङ्क्य निराकरोति—**न चेति**। **अन्यथेति**। अनुपपत्तिज्ञानं विनापि कल्पना स्यादित्यर्थः । **अर्थापत्त्याभासेति** । सत्तावस्थितव्याप्त्यैव कल्पने वस्तुतो यदुपपादकं तत्कल्पनैव परं स्यादित्यर्थः । अन्वयव्यतिरेकाभ्यां व्याप्तिग्रहोपायमाह—**यदाहमिहेति**। ननु जीवतो गृहासत्त्वेन बहिःसत्त्वे साध्ये बहिःसत्त्वं व्यापकं गृहासत्त्वं व्याप्यमिति व्यतिरेकव्याप्तौ बहिरसत्त्वं व्याप्यं जीवतो गृहसत्त्वं व्यापकमिति यद्योगप्राथम्याभ्यां व्याप्यस्य निर्देशाद्यदाहं नान्यत्र तदाहमिहेति वक्तुं युज्यते । एवमन्वयव्याप्तावपि यदाहमिह तदा नान्यत्रेति वक्तुमर्हति । सत्यम् । यदाहं नान्यत्र तदाहमिहेति व्यतिरेकव्याप्तौ यदा नाहमिह तदान्यत्रेत्यन्वयव्याप्तौ यत्तदोर्व्यत्यासेन योजनात् । समव्याप्तिकत्वस्फोरणार्थमेवमुक्तमित्यन्ये ।

ननु देशान्तरस्येन्द्रियासंनिकृष्टत्वात्कथं तत्र स्वव्यतिरेको ग्राह्यः । न । स्वात्मन्येव देशान्तरसंसर्गाभावग्रहात् । ननु व्याप्तिसत्त्वेऽपि गृहासत्त्वस्य देवदत्तावृत्तित्वादपक्षधर्मतया नानुमानमित्यत आह—**न चेति** । गृहनिष्ठाभावप्रतियोगित्वस्य लिङ्गस्य पक्षधर्मत्वादित्यर्थः । उपरि सविता भूमेरालोकवत्त्वादित्यत्रापि यदा तदेति कालगर्भैव व्याप्तिर्गृह्यते । भूमेरुपरि संनिहितसवितृकत्वं वा साध्यम् । ननु व्याप्तस्य पक्षधर्मत्वमनुमानत्वम्, व्यतिरेकिणि तु व्यतिरेकयोर्व्याप्तिरन्वयस्य च पक्षधर्मत्वमतो नानुमानत्वम् ।

अत्राहुः । व्याप्तिपक्षधर्मतोपजीवनेन यद्बोधकं तदनुमानम् । व्यतिरेकिणोऽपि साध्याभावव्यापकाभावप्रतियोगिनः पक्षधर्मतया तद्विशेषत्वं स्यात् । व्यतिरेकव्याप्त्या वान्वयव्याप्तिरनुमीयते । यथा च विशेष्यासंनिकर्षे तृतीयलिङ्गपरामर्शस्तथा तृतीयलिङ्गपरामर्शस्थल एव व्युत्पादितमधस्तात् । **न चात्रेति** । जीवी देवदत्तः क्वाप्यस्तीत्येकं प्रमाणं गेहे नास्तीत्यपरमनयोर्विरोधज्ञानं करणमविरोधज्ञानं फलमपि नेत्यर्थः । **तथाचेति** । एकस्मिन्धर्मिणि मिथो विरुद्धार्थग्राहिणोरेकस्य मिथ्यात्वावश्यकत्वात्तयोर्मानत्वमसिद्धमित्यर्थः । **विभिन्नेति** । प्रमाणत्वे वा भिन्नविषयत्वमावश्यकमित्यर्थः । ननु क्वचिदस्तीत्यस्य क्वचित्त्वेन गृहस्यापि विषयीकरणाद्गेहेऽस्तिनास्तीतिवदेकविषयतया विरोधः स्यादित्याह—**सामान्यत इति** । **विभिन्नदेशतयेति** । विषयभेदेन यदुपपादनं तत्प्रमाणयोर्वैषयिकभेदप्रतिसन्धानात् । तच्च भावाभावयोर्भिन्नदेशतयैवोपलम्भात् । तथाच व्याप्तिज्ञानमावश्यकमित्यर्थः । **प्रसिद्धानुमानेति** । धूमा-

द्वह्निसत्त्वेऽनुपलब्धेश्च तदसत्त्वे भावाभावग्राहकयोर्विरोधेऽर्वाग्भाग-परभागयोस्तद्व्यवस्थापनमर्थापत्तिफलमेव स्यादिति नानुमानं स्यादित्यर्थः। **अनुमानाभाव इति।** धूमाद्वह्निना भाव्यमित्यनेन सममनुपलब्धेर्विरोधस्तदा यदि धूमो वह्नेरनुमापकः स्यात्। तथाच सिद्धमनुमानमित्यर्थः। **व्याप्तिग्राहकेणेति।** अनुमानेन समं विरोधो नोक्तः किन्तु धूमवह्निव्याप्तिग्राहकमानेन सहेत्यर्थः। अथ सामान्यग्राहकमानस्य विशेषतोऽनुपलब्धिर्बाधिकैव तदा क्वचिदस्तीत्यस्यापि गेहे नास्तीत्यनेन सह न विरोध इति तुल्यमिति भावः। **केवलव्यतिरेक्यादिवदिति।** यथा केवलव्यतिरेक्यनुमानान्तरात्केनापि वैधर्म्येण पृथक् तथा श्रुतार्थापत्तिरपि दृष्टार्थापत्तेः पृथगस्त्वित्यर्थः। **एकस्येति।** पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्राप्रसिद्धरात्रिभोजनस्य भोजनसाध्यपीनत्वज्ञापनमनुपपन्नं रात्रिभोजनमादाय सिध्यति तथाहि। यथाऽभोजी पीन इत्यत्र न योग्यताज्ञानं तथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्रापि दिवाभोजनस्य योग्यताघटकरात्रिभोजनस्याप्रतीतेः। अतो योग्यताघटकोपस्थितिं विनान्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्त इति वाक्यं कल्पयित्वा तेन सहान्वयबोधं जनयति। एवञ्च श्रूयमाणस्यान्वयबोधजनकत्वं योग्यताघटकोपस्थापकेन शब्देन विनानुपपद्यमानं तं कल्पयित्वा यत्रान्वयबोधं जनयति तत्र श्रुतार्थापत्तिरित्यर्थः। ननु लाघवाद्रात्रिभोजनमेव कल्पयितुं युक्तं, शब्दस्यापि तदुपस्थापनद्वारा योग्यताघटकत्वादित्यत आह—**शाब्दी हीति।** तथाच शब्दोपस्थापितमेव पदार्थमादायान्वयबोधकत्वमिति शब्द

एव कल्प्यत इत्यर्थः । तदुपपादयति—**न हीति** । ननु यत्र किं पचतीत्युक्ते कलायं दर्शयति तत्र शब्दं विनापि भवत्येवान्वयबोध इत्यत आह—**क्वचिदिति** । अन्यत्र तथा कल्पनादित्यर्थः ।

ननु पचतीत्युक्ते स्वयं स्मृतेनान्योदीरितेन वा कलायमिति शब्देनापि नान्वयबोधः । अथ तस्य पचतीत्यन्वयपरत्वं न ज्ञातमित्यन्वयबोधस्तर्ह्यर्थकल्पनेऽपि तदर्थान्वयपरोपस्थितिरन्वयबोधाङ्गमित्यस्तु । एवं द्वारमित्यत्रापि लाघवात्पिधानमेव कल्प्यते न तु पिधेहिशब्दः ।

अत्राहुः । द्वारमित्यत्र पिधेहिशब्दाध्याहारं विना द्वितीया न स्यात् । क्रियावाचकसमभिव्याहारं विना तत्साधुत्वाभावात् । किञ्च । यद्यन्यथोपस्थितेरेवान्वयबोधस्तदा घटमानयेत्यत्रेव घटः कर्मत्वमानयनं कृतिरित्यत्र कुतो नान्वयबोधः । अथ तथाविधपदोपस्थापितपदार्थे परस्परमाकाङ्क्षैव नास्ति तर्हि पदार्थोपस्थितिमात्रं नान्वयबोधाङ्गम् । किन्तु पदविशेषोपस्थितः पदार्थः शब्दोपस्थापितपदार्थेनान्वयप्रतियोगीति सिद्धम् । एवञ्च तत्र शब्दकल्पनात्पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्रापि रात्रौ भुङ्क्त इति शब्द एव कल्प्यते ।

**अनुमितेनेति** । यद्यपि पीनत्वं पदार्थतया नानुमेयम् । तथापि दिवसाभोजनविशिष्टं पीनत्वं वाक्यार्थतयानुमेयमेव ।

ननु वाक्यार्थस्यानुमेयत्वेऽपि योग्यतादिकं लिङ्गविशेषणमिति भाविनः कथं पदार्थसंसर्गोऽनुमेयः ।

उच्यते । बाधकमानाभावो योग्यता । अतो दिवा भोजन-

बाधेऽपि भोजनसामान्यं बाधितं नास्ति । यावद्विशेषबाधं हि सामान्यबाधो, न चेह रात्रिभोजनमपि बाधितम् । एवञ्च भोजनसामान्यमादाय योग्यताज्ञानं भविष्यति रात्रिभोजनाज्ञानेऽपि ।

**यत्पुनरिति** । यथाभूतस्य यस्य गमकत्वं तथाभूतस्यैव लिङ्गत्वं स्यादिति भावः । **न हि कार्यमिति** । यद्यपि शतसंख्या कार्या न सहस्रसंख्या । तथापि शतारम्भकैकत्वारभ्यत्वं सहस्रस्यास्तीति शतसहस्रसंख्ययोः कार्यकारणभाव उक्तः ॥

**क्वचित्प्रत्यक्षमिति** । इन्द्रियव्यापारान्वयाद्यनुविधानादित्यर्थः । ननु चाभावो न प्रत्यक्षः । इन्द्रियेण संनिकर्षाभावात् । न च विशेषणताप्राप्तिः । समवायानभ्युपगमेनात्र तदकल्पनात् । नाप्यभावोऽनुमानम् । तस्याप्रत्यक्षस्याज्ञायमानतयाऽलिङ्गत्वादित्याह—**नन्वभावस्येति** । तस्याभावस्येत्यर्थः । **स चाभाव इति** । अभावप्रतीतेः साक्षात्कारित्वेनैव प्रत्यासत्त्यन्तराभावेन विशेषणतायाः प्रत्यासत्तेः कल्पनादित्यर्थः । **न त्विहेति** । तथाच साक्षात्कारित्वासिद्धौ न ततो विशेषणताकल्पनमित्यर्थः । **वैजात्यादिति** । प्राङ्नास्तितायामभावधारानुमानिकी न प्रत्यक्षा । तथाच प्रत्यक्षाभावप्रतीतौ नेन्द्रियव्यभिचार इत्यर्थः । अन्यथातिप्रसङ्गमाह—**तथा व्यभिचार इति** । एकजातीयत्वाभावेऽपि व्यभिचार्यैवेत्यर्थः । **तस्येति** । तस्येन्द्रियस्य । वज्रलेपायमानत्वादव्यभिचारित्वादित्यर्थः । **एकज्ञानेति** । चैत्रेण सममेकग्रहणयोग्यस्य ज्ञायमानत्वेऽपीत्यर्थः । संयुक्तविशेषणतया मनःसंनिकर्षेण स्मरणार्हस्य चैत्रस्य स्मरणाभावं गृहीत्वा तेन लिङ्गेन भूतले तदानीं चैत्राभावस्यानुमा-

नामिति भावः ।

नन्वेकग्रहणज्ञानयोग्यतायामपि संस्कारोद्बोधकवशात्किञ्चिदेव स्मर्यते न सर्वमित्यस्मरणमन्यथासिद्धम् ।

अत्राहुः । यद्भूतलं घटादितुल्यपरिमाणवद्द्रव्यवत्तत्काले भवति तद्द्रव्यवत्तया तद्भूतलं मया स्मर्यत एव परमिति व्याप्तिः । तथाच स चैत्रो न तत्काले भूतलवर्ती घटादितुल्यपरिमाणत्वे सति तत्काले तद्भूतलवर्तितया मयेदानीमस्मर्यमाणत्वात् मैत्रवत् । न चाप्रयोजकत्वम् । यदि स चैत्रो घटादितुल्यपरिमाणत्वे सति तत्काले तद्भूतलवर्ती स्यात्तदेदानीं तद्भूतलवर्तितया घटवत् स्मर्येतेति तर्कसद्भावात् ।

**न चैवमिति** । भूतलस्य पक्षत्वे ज्ञानाभावो व्यधिकरणो न लिङ्गम् । तस्य प्रतियोगिसमानदेशत्वे नानात्मवृत्तित्वादिति शङ्कार्थः । **भूतलेति** । यद्यप्यभावस्य सविषयकत्वं नास्ति । तथापि भूतलविषयकज्ञाननिरूप्यत्वमेव भूतलज्ञानाभावयोः सम्बन्धः । **परस्य त्विति** । तन्मते त्वनुपलब्धिर्लिङ्गतया न प्रमाणं येन व्यधिकरणिका न गमिका । किन्त्वात्मन्येव वर्तमाना स्वातन्त्र्येण प्रमायां करणमित्यर्थः । **वस्तुगत्येति** । नाभाववत्तया ज्ञायमानेन । येनोक्तदोषः स्यादित्यर्थः । तदेव विशदयति—**न चेति** । वस्तुतो घटवद्भूतलं घटाभावाभावादित्यर्थः । **सत्तामात्रेणेति** । अभावस्येति शेषः । ननु घटाभाववता भूतलेनानुपलब्धिर्निरूप्यतां नाभाव इत्यत आह—**यदि त्विति** । **तच्च जात्युत्तरमेवेति** । अनुपलब्ध्यैव घटसत्त्वप्रसङ्गोऽनुपलब्धिसमा जातिः स्यादित्यर्थः । **न चेदेवमिति** । अनुपलब्धि-

प्रमाणत्वपक्षेऽपि कीदृशेन भूतलेन सा निरूप्येतेत्यर्थः । नन्व-भावधीर्न प्रत्यक्षा येन वैजात्यान्न व्यभिचारः । न चेन्द्रियान्वय-व्यतिरेकानुविधानात्तथा। इन्द्रियेण प्राप्त्यभावात्तयोराश्रयग्रहोपक्षीण-त्वमनुमिताविवेत्याह—**स्यादेतदिति** । एवं तर्हि रूपादिधीरपीन्द्रि-यजन्या न स्यादाश्रयग्रह एवेन्द्रियोपयोगात् । अथ साक्षात्करो-मीत्यनुव्यवसायात्तत्र तथा तुल्यमिहापीत्याह—**भवेदेवमिति**। अत एव नेन्द्रियायोग्यत्वमपीत्याह—**न च योग्यताया इति** । **तथा सतीति** । योग्यताव्यतिरेके सति साक्षात्कारव्यतिरेकः तस्मिंश्च सति योग्यताव्यतिरेक इत्यन्योन्याश्रय इत्यर्थः । **तर्हि यत्रेति** । अभावेनापि सहेन्द्रियाव्यवधानात् सोऽपि साक्षात्कारविषय इत्यर्थः। ननूक्तमिन्द्रियेण प्राप्तिर्नास्ति । न चेन्द्रियं प्राप्तविशेषणमप्राप्तमपि गृह्णाति । न च विशेषणताप्राप्तिः । समवायानभ्युपगमेनान्यत्र तदकल्पनात् । न चाभावस्यैन्द्रियकत्वादिहैव तत्कल्पनम् । अन्यो-न्याश्रयात् । विशेषणताकल्पनायां तत्सिद्धेस्तत्सिद्धौ च विशेषण-ताकल्पनमिति । तस्मादिन्द्रियमाश्रयग्रह एवान्यथासिद्धम् । योग्यानुपलब्धिधीरेवाभावधीकरणम् । त्वयापीन्द्रियसहकारित्वे तस्या हेतुत्वोपगमात् । तदुपलम्भे तदभावाग्रहादित्यत आह—**यदि चेति** । इन्द्रियस्याश्रयग्रहेणान्यथासिद्धावर्थस्य नीले पटे रक्ताभावोपलम्भः स्यात् । आश्रयग्रहणप्रतियोगिस्मरणयोग्या-नुपलब्धीनां सत्त्वादित्याह—**अर्थस्यापीति** । **ममापीति** । अर्थस्य तु रूपग्राहकेण चक्षुषा न पटस्योपलब्धिरिति नातिप्रसङ्ग इत्यर्थः ।

**वायाविति**। प्रतियोगिग्राहकेण चक्षुषा वायोरग्रहात्। किन्तु त्वचा त्वन्वये तद्ग्रहः। वायौ रूपाभाव इति धीरनुपलब्धेर्न स्यादित्यर्थः।

ननु यथा नीरूपो वायुरिति धीर्वायुविशेष्यका भवतामानुमानिकी विशेष्ययोग्यतामाश्रित्येन्द्रियाणां प्रवृत्तेः तथा वायुविशेषणकाभावविशेष्यकमपि ज्ञानमनुपलब्धिलिङ्गमतः साक्षात्कारित्वाभिमताभावप्रतीतावियं सामग्रीति नोक्तदोषः।

मैवम्। वायौ रूपाभाव इति धीः साक्षात्कारिण्येव। या हि प्रतियोगिसत्त्वविरोधिनी साऽनुपलब्धिः। सा योग्यानुपलब्धिरभावग्राहिका। सा चक्षुःसंनिकृष्टे महति वायावस्त्येवेति वायावपि चक्षुर्ग्राह्यैव रूपाभावप्रतीतिः। युक्तं चेदम्। अज्ञातयोग्यानुपलब्धिसहितादन्वयाद्यनुविधायिन इन्द्रियादेव भूतले घटाभावप्रतीतिवद्वायौ रूपाभावप्रतीतिसम्भवात्। अन्यथा घटादावपि गन्धरसविशेषाभावप्रतीतिरपि योग्यानुपलब्धिलिङ्गादेव स्यात्। विनिगमकाभावात्। वस्तुतो वायौ रूपाभावधीर्नानुपलब्धिलिङ्गजन्या। आप्तवाक्यादेस्तद्बोधकस्याभावात्। न चाज्ञातैव रूपोपलब्धेरनुपलब्धिस्तद्बोधिका। ततो (त्रो) पलब्धेरतीन्द्रियतया योग्यानुपलब्ध्या तदभावस्याग्रहात्। अनुपलब्धिमात्रस्य चाभावाग्राहकत्वात्। किञ्च। वस्तुतो घटवत्युपलब्धिप्राक्कालेऽनुपलब्ध्या घटस्मृतिः कुतो नाभावधीः। घटाभावाभावादिति चेत्। तर्ह्यभावबुद्धेरर्थजत्वात् साक्षात्कारितयेन्द्रियजत्वमेव। इन्द्रियं च नाप्राप्तग्राहकमिति तत्प्राप्तिरपि विशेषणता कार्यदर्शनात्कल्प्या संयोगवत्।

